५. **पाठस्थकथायां प्रत्यक्षकथनरूपेण आगतानि वाक्यानि एकशः साभिनयं पठित्वा कक्षायां श्रावयत ।**

६. **श्लोकं पठित्वा अधस्तनकार्यकलापौ कुरुत**

क्षमा बलमशक्तानां शक्तानां भूषणं क्षमा ।
क्षमावशीकृते लोके क्षमया किं न सिद्ध्यति ॥

(अ) **प्रश्नान् उत्तरयत**

(क) अशक्तानां बलं किम् अस्ति ?

(ख) शक्तानां बलं किं वर्तते ?

(ग) क्षमया कः वशीकृतः विद्यते ?

(घ) कया सर्वं सिद्ध्यति ?

(ङ) श्लोके प्रयुक्तं क्रियापदं किम् ?

(आ) **क्षमादानस्य महत्त्वविषये चत्वारि वाक्यानि लिखत ।**

क्षमा कमजोरहरूको बल हो, क्षमा नै समर्थहरूको गहना हो । यो संसार नै क्षमाको वशीभूत भएर चलेको छ भने यहाँ क्षमाद्वारा सिद्ध नहुने कुन काम छ र ? अर्थात्, क्षमाद्वारा सबै काम सिद्ध गर्न सकिन्छ ।

७. **पाठस्य षष्ठं सप्तमं च अनुच्छेदं पठित्वा अव्ययपदानि क्रियापदानि च सङ्कलय्य तेषाम् अर्थं अन्विषत ।**

## लेखनम्

१. **पाठस्य द्वितीयानुच्छेदस्य अनुलेखनं कुरुत ।**

२. **पुस्तकं शब्दकोशं शिक्षकसहयोगं वा अवलम्ब्य शब्दानाम् अर्थं नेपालीभाषायां लिखत**

सुहृदम्, प्रक्लन्द्य, परिकल्प्य, अक्रन्दत्, दग्धहृदयः, ध्वनिना, बालुकाः ।

३. **अधस्तनपदानां स्वशब्दैः वाक्येषु प्रयोगं दर्शयत**

झटिति, यथासमयम्, निरन्तरम्, उच्चैः, एव, अपृच्छत्, उदतरत्, अकथयत्, आसीत्, जातम् ।

४. **प्रदत्तस्य श्लोकस्य आधारेण मित्रस्य लक्षणानि विलिखत**

इष्टं ददाति गृह्णाति कार्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव षड्विधं मित्रलक्षणम् ॥

जसले हामीले इच्छा गरेको चिज दिन्छ र त्यसै गरी आफूले पनि हामीबाट लिन्छ, हामीलाई आफ्ना व्यक्तिगत कुराहरू सुनाउँछ र हाम्रा पनि व्यक्तिगत कुराहरूबारे जिज्ञासा राख्दछ, हामीसँगै बसेर खान्छ र हामीलाई पनि खान बोलाउँछ, ऊ नै हाम्रो मित्र हो । असल साथीका छओटा लक्षण यिनै हुन् ।

५. **श्रुतपूर्वां कथां नेपालीभाषायां लिखित्वा शिक्षकं दर्शयत ।**

६. **पाठाधारेण समुचितं विकल्पं विचित्य रिक्तस्थानं पूरयत**

(क) गुणराजस्य पुत्रस्य नाम .................. आसीत् । (सुमनः, शशी)

(ख) विकासः मित्रपुत्रौ .................. अगमयत् । (साधारणविद्यालये, संस्कृतविद्यालये)

(ग) .................. प्रशिक्षितौ जातौ । (मृगशावकौ, वानरशावकौ)

(घ) विकासः .................. आसीत् । (धनवान्, धनहीनः)

(ङ) .................. महत्त्वं सर्वोपरि वर्तते । (क्षमायाः, तृष्णायाः)

७. **पाठाधारेण एकवाक्येन प्रश्नान् उत्तरयत**

(क) शङ्करपुरग्रामः कुत्र वर्तते ?

(ख) के मित्रे स्तः ?

(ग) सन्तानहीनौ कौ ?

(घ) निर्धनः कः ?

(ङ) गुणराजस्य परिवारे कति सदस्याः आसन् ? के च ते ?

(च) विकासस्य कुलपूर्वजाः कस्य निकटस्थाः आसन् ?

(छ) विकासदम्पती कस्य हेतोः तीर्थाटनाय अगच्छताम् ?

(ज) किं दृष्ट्वा गुणराजस्य मनसि तृष्णा समुत्पन्ना ?

(झ) विकासस्य पत्नी विकासं किं परामृष्टवती ?

(ञ) विकासः पठनाय कौ विद्यालये न्ययोजयत् ?

(ट) विकासः कौ मानवबालकवत् प्राशिक्षयत् ?

(ठ) गुणराजः किमर्थम् उच्चैः अक्रन्दत् ?

(ड) गुणराजः केन कारणेन दण्डितः अभवत् ?

(ढ) गुणराजस्य पुत्रस्य पुत्र्याः च नामनी के आस्ताम् ?

(ण) लोभः कस्य कारणं भवति ?

८. **'लोभः पापस्य कारणम्' इति विषये पाठाधारेण पञ्च वाक्यानि लिखत ।**

९. **पाठस्थकथायाः सारवाक्यं लिखत ।**

## व्याकरणानुशीलनम्

१. **प्रदत्ते धातुरूपावली पठित्वा अभ्यासपुस्तिकायाम् अनुलिखत**

पठ्-धातोः वर्तमानकाले (लट्-लकारे) रूपाणि-

| **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** | |
|---|---|---|---|
| पठति | पठतः | पठन्ति | – **प्रथमः पुरुषः** |
| पठसि | पठथः | पठथ | – **मध्यमः पुरुषः** |
| पठामि | पठावः | पठामः | – **उत्तमः पुरुषः** |

लभ्-धातोः वर्तमानकाले (लट्-लकारे) रूपाणि-

| | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| **प्रथमः पुरुषः** | लभते | लभेते | लभन्ते |
| **मध्यमः पुरुषः** | लभसे | लभेथे | लभध्वे |
| **उत्तमः पुरुषः** | लभे | लभावहे | लभामहे |

२. **उपरितन्याः रूपावल्याः साहाय्येन उदाहरणं च अनुसृत्य धातुरूपं परिवर्तयत**

| | | |
|---|---|---|
| यथा- खाद्- खादति | लिख्- लिखति | वद्- वदति |
| गम् (गच्छ्)- गच्छति | स्था (तिष्ठ्)-तिष्ठति | भू (भव्)-भवति |
| एध्- एधते | वन्द्- वन्दते | विजि (विजय्) -विजयते |
| क्रीड्- क्रीडसि | पा (पिब्)- ............ | दृश् (पश्य्)- ............ |
| गम् (गच्छ्) - ............ | वस्- वसामि | लिख्- ............... |
| भज्- ............... | धाव्- ............. | आगम् (आगच्छ्)- आगच्छन्ति |
| निवस्- निवसामः | पा (पिब्)- .......... | स्था (तिष्ठ्)- ............ |
| एध्- एधसे | वन्द्- ............ | विजि (विजय्) - ......... |
| वन्द्- ................ | स्पर्ध्- स्पर्धे | एध्- ................ |

**३. गम् (गच्छ्)-धातोः पठ्-धातुवत् वर्तमानकाले (लट्-लकारे) रूपाणि लिखत ।**

**४. एध्-धातोः लभ्-धातुवत् लट्-लकारे (लटि) रूपाणि लिखत ।**

**५. शिक्षकाद् यथावश्यकं साहाय्यम् अवाप्य परस्परं मेलयत**

| | |
|---|---|
| सः/सा/तत्/छात्रः | पठसि |
| तौ/ते/ते/छात्रौ | पठन्ति |
| ते/ताः/तानि/छात्राः | पठतः |
| त्वम् | लिखामि |
| युवाम् | एधध्वे |
| यूयम् | लभामहे |
| अहम् | गच्छति |
| आवाम् | निवसथः |
| वयम् | क्रीडावः |

**५. उदाहरणम् अनुसृत्य सन्धिं कुरुत**

**यथा–** इति + आदिः - इत् इ + आदिः - इत् य् + आदिः - इत्यादिः ।

वाणी + एका - वाण् ई + एका - वाण् य् + एका - वाण्येका ।

अति + अधिकम् - अत् इ + अधिकम् - अत् य्+अधिकम् - ......... ।

प्रति + एकम् - ...................... - ...................... - प्रत्येकम् ।

अधि + आदेशः - ................... - ................... - ................. ।

.................. - .................... - .................. - प्रत्युत्तरम् ।

इतोऽपि+अधिकम् - .................. - .................. - इतोऽप्यधिकम् ।

**यथा-** अनु+एषणम् - अन् उ+एषणम् - अन् व् + एषणम् - अन्वेषणम् ।

वधू+आगमनम् - वध् ऊ+आगमनम् - वध् व्+आगमनम् - ......... ।

अनु + अयः - .................... - .................. - अन्वयः ।

सु + आगतम् - ................. - ................... - ............... ।

................. - .................. - .................. - गुर्वादेशः ।

सु + अल्पम् - ................... - ................... - स्वल्पम् ।

**यथा-** मातृ+अनुमतिः - मात् ऋ+अनुमतिः - मात् र्+अनुमतिः-मात्रनुमतिः ।

पितृ + आदेशः - पित् ऋ + आदेशः - पित् र्+आदेशः - ............. ।

सवितृ + ए - .................. - ..................... - सवित्रे ।

कर्तृ + आज्ञा - ................... - ..................... - ............... ।

................ - ................... - ..................... - नेत्रनुकरणम् ।

भ्रातृ + उपदेशः - ................ - .................... - भ्रात्रुपदेशः ।

| **यण्-सन्धिनियमाः** | | |
|---|---|---|
| **अवस्था** | **परिवर्तनम्** | **उदाहरणम्** |
| इ/ई + इवर्णभिन्नाः स्वरवर्णाः | इ/ई स्थाने- य् | अति + आचारः = अत्याचारः<br>नदी + अत्र = नद्यत्र<br>कपि + ईशः, अत्र यण्सन्धिः न । |
| उ/ऊ+उवर्णभिन्नाः स्वरवर्णाः | उ/ऊ स्थाने- व् | मधु + अरिः = मध्वरिः<br>वधू + अनुरोधः = वध्वनुरोधः<br>सु + उक्तिः, अत्र यण्सन्धिः नः । |
| ऋ + ऋवर्णभिन्नाः स्वरवर्णाः | ऋ स्थाने र् | दुहितृ + इच्छा = दुहित्रिच्छा<br>स्वसृ + उक्तिः = स्वस्रुक्तिः<br>वक्तृ + ऋषिः, अत्र यण्सन्धिः न । |

६. **सन्धिं सन्धिविच्छेदं वा कुरुत**

(क) इति + उक्तिः = ................ उपर्युक्तः = ............. + ...........

(ख) गुरु + अनुमतिः = ............. अन्वगच्छत् = .......... + ...........

(ग) वि + अक्तिः = ................. अत्यन्तम् = ............. + ...........

(घ) श्रोतृ + अतिरिक्तः = ........... धात्रंशः = ................ + ............

७. **पाठाद् यण्-सन्धियुक्तानि पदानि अन्विष्य तेषां विच्छेदं प्रदर्शयत ।**

८. **कोष्ठस्थसङ्केतम् अनुसृत्य शब्दरूपावल्याः साहाय्येन च समुचितविभक्त्यन्तपदैः रिक्तस्थानं पूरयत**

(क) ................... आह्वानकर्तारं नमतः स्म । (वानर- प्रथमाविभक्तेः द्विवचने)

(ख) ................... गृहकार्यं कुर्वन्ति । (छात्र- प्रथमाविभक्तेः बहुवचने)

(ग) ................... सन्तानरहितः आसीत् । (विकास- प्रथमाविभक्तेः एकवचने)

(घ) ह्यः ................... कक्षायां कथा श्रूता । (अस्मद्- तृतीयाविभक्तेः बहुवचने)

(ङ) विकासः गुणराजश्च ................... आस्ताम् । (मित्र- प्रथमाविभक्तेः द्विवचने)

(च) द्वे ................... परस्परं संवदतः । (महिला- प्रथमाविभक्तेः द्विवचने)

(छ) ............... कन्दुकेन क्रीडन्ति ।(तद्- पुंलिङ्गे, प्रथमाविभक्तेः बहुवचने)

## ९. पाठाद् उद्धृतं कथांशं पठित्वा यथानिर्देशं कुरुत

लोभान्धः <u>गुणराजः</u> सहर्षं मित्राय पुत्रौ समर्पयितुं सम्मतो जातः । <u>विकासः</u> मित्रपुत्रौ सहैव नीत्वा निरगच्छत् । ग्रामात् किञ्चिद् दूरं छात्रावासेन सहितः <u>संस्कृतविद्यालयः</u> आसीत् । <u>विकासः</u> तौ तस्मिन् विद्यालये पठनाय न्ययोजयत् । विद्यालयं प्राप्य हृष्टौ तौ <u>विकासः</u> उपादिशत्, "<u>युवां</u> सम्यक् पठतम् । गुरूणाम् आज्ञाम् अनुसरतम् । अनुशासनं परिपालयतम् । सखिभिः सह सदा सम्यग् व्यवहरतम् । <u>अहं</u> यथासमयं मेलनाय आगमिष्यामि ।"

(क) कथांशे आगतेषु वाक्येषु रेखाङ्कितानि पदानि कर्तृपदानि सन्ति । तेषां क्रियापदम् अन्विष्य प्रथमं द्विपदवाक्यानि तदनु बहुपदवाक्यानि रचयत । यथा-

- गुणराजः जातः । गुणराजः सम्मतः जातः । गुणराजः मित्राय पुत्रौ समर्पयितुं सम्मतः जातः ।
- विकासः न्ययोजयत् । विकासः तौ न्ययोजयत् । विकासः तौ विद्यालये न्ययोजयत् ।

(ख) उपरितने कथांशे प्रयुक्तयोः द्वयोः कर्तृपदयोः विशेषणपदानि सन्ति । यथा-

कर्तृपदम्- गुणराजः । विशेषणपदानि- लोभान्धः, सम्मतः, जातः ।

कर्तृपदम्- संस्कृतविद्यालयः । विशेषणपदम्- सहितः ।

(ग) पाठस्थकथातः कर्तृपदेन सहितानि दश वाक्यानि अन्विष्य कर्तृपदानि तेषां क्रियापदानि विशेषणपदानि च परिवेष्ट्य तेषां वचननिर्देशं कुरुत ।

(घ) कर्तृपदानि प्रयुज्य पञ्च वाक्यानि स्वशब्दैः रचयत ।

## रचनात्मकः अभ्यासः

१. **प्रदत्तं पद्यं गद्ये परिवर्त्य सन्मित्रलक्षणविषये एकम् अनुच्छेदं रचयत**

पापान्निवारयति योजयते हिताय
गुह्यानि गूहति गुणान् प्रकटीकरोति ।
आपद्गतञ्च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥

> विद्वान्हरू असल मित्रको विशेषताबारे यसरी वर्णन गर्छन्-
>
> जसले पापकर्म वा अपराधबाट जोगाउँछ, सधैँ हित हुने कामतर्फ प्रेरित गर्छ, गोप्य राख्नुपर्ने कुराहरूमा गोपनीयता कायम राख्छ, राम्रा पक्ष वा गुणहरूको प्रचार प्रसार गरिदिन्छ, दुःखमा परेका बखत कहिल्यै छोड्दैन र आवश्यक परेको समयमा यथोचित सहयोग गर्छ, त्यो नै असल मित्र हो ।

२. **प्रदत्तं कोष्ठस्थसूत्राणां सहयोगेन च लघुकथां रचयित्वा समुचितं शीर्षकं दत्त**

> काकः रोटिकां चोरयति, रोटिकां चञ्च्वा गृहीत्वा वृक्षशाखायां वसति, शृगालः तं पश्यति, शृगालस्य लालसा, चतुरः शृगालः उपायं विचिन्त्य गायति- अहो ! अद्भुतः सुन्दरः काकः एषः, कण्ठस्वरः अपि मधुरः भवेत् ..... न जाने कथं मधुरं गायति अयम् .... । स्वीयां प्रशंसां श्रुत्वा पुलकितः काकः गायनाय चञ्चुम् उद्घाटयति, रोटिकाम् अधः पतति, तं गृहीत्वा शृगालः शीघ्रं धावति ।

**३. अन्तर्जालमाध्यमेन सन्मित्रपरिचायकानि पञ्च सुभाषितवाक्यानि सङ्कलय्य स्थूलाक्षरेण कर्गजपट्टे लिखित्वा कक्षाप्रकोष्ठे स्थापयत ।**

## श्रवणपाठः

ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदश्चेति वेदः चतुर्विधो वर्तते । शिक्षा, कल्पः, व्याकरणम्, निरुक्तम्, छन्दः, ज्योतिषम् इत्येतानि वेदाङ्गानि सन्ति । षट् अङ्गानि सन्तीति कारणेन वेदः षडङ्गः उच्यते । अङ्गशब्दस्य अर्थः 'उपकारकः' इति भवति । वेदार्थज्ञानाय येषां शास्त्राणाम् आवश्यकता भवति, तानि एव शास्त्राणि वेदाङ्गानि कथ्यन्ते । अतः वेदाङ्गानि वेदानां सम्यग् अवबोधाय विरचितानि सन्ति इति विज्ञायते । वेदमन्त्राः प्रायेण छन्दोबद्धाः सन्ति परन्तु सर्वाणि अपि वेदाङ्गानि गद्ये लिखितानि सन्ति । वेदाङ्गानि वैदिकोत्तरकाले विरचितानि सन्ति । वेदाङ्गेषु शिक्षा वेदस्य नासिका वर्तते । कल्पः वेदस्य हस्तः अस्ति । व्याकरणं वेदस्य मुखं विद्यते । छन्दः वेदस्य पादः उच्यते । निरुक्तं वेदस्य कर्णः कथ्यते । ज्योतिषं वेदस्य नयनं मन्यते । अत एतेषाम् अङ्गानाम् अध्ययनानन्तरं वेदस्य अध्ययने कृते एव वेदार्थस्य तन्निहितस्य विपुलज्ञानस्य च सम्यग् अवबोधं कर्तुं शक्यते ।

**पाठप्रवेशः**

# पत्रलेखनप्रकारः




शिक्षकः कक्षायां प्रविशति । ततः सर्वे छात्राः उत्तिष्ठन्ति ।

**छात्राः** नमस्काराः गुरवः !

**गुरुः** नमस्काराः । उपविशत ।

**छात्राः** धन्यवादाः गुरवः ।

**गुरुः** धन्यवादाः । कुशलाः स्थ ?

**छात्राः** आम् गुरवः ! वयं कुशलाः स्मः ।

**सुप्रभा** भो गुरवः ! अद्य शुक्रवासरः । अद्य तु सर्जनात्मकलेखनाभ्यासस्य दिनम् अस्ति । अद्य भवान् अस्मान् किं शिक्षयति ?

**गुरुः** आम्, आम् सुप्रभे ! त्वया सम्यग् उक्तम् । अद्य अहं निवेदनपत्रलेखनं शिक्षयामि । युष्माकं निवेदनस्य विषये ज्ञानम् अस्ति न वा ?

**छात्राः** न, गुरवः !

**गुरुः** अस्तु तर्हि सावधानेन शृणुत । यस्मिन् कस्मिन् अपि कार्यालये स्वस्य प्रयोजनाय निवेदनपत्रं लिख्यते । यथा विद्यालयादिषु छात्राणां कृते अवकाशार्थम्, लब्धाङ्कपत्रार्थम्, चारित्रिकपत्रार्थम्, तथैव छात्रवृत्तीनां, आवश्यक-क्रीडासामग्रीणां च कृते प्रधानाध्यापकाय निवेदनपत्रं प्रदीयते । अन्येषु कार्यालयेषु अपि स्वप्रयोजनाय निवेदनपत्रं लिख्यते ।

लेखनप्रकारश्च यथा -

**प्रथमचरणः** सर्वप्रथमं निवेदनपत्रस्य दक्षिणभागे दिनाङ्काः समाविश्यन्ते ।

**द्वितीयचरणः** द्वितीयचरणे निवेदनपत्रस्य वामभागे यस्मै प्रदीयते तस्य सम्बोधनम्, कार्यालयस्य नाम, स्थानं च निर्दिश्यते ।

**तृतीयचरणः** तृतीये चरणे निवेदनपत्रस्य मध्यभागे लेखनप्रयोजनस्य विषयः प्रस्तूयते ।

**चतुर्थचरणः** चतुर्थचरणे स्वकीयं परिचयं विधाय समस्यां च प्रदर्श्य समाधानाय अनुरुद्ध्यते ।

**पञ्चमचरणः** पञ्चमे चरणे चतुर्थचरणस्य कार्यं समाप्य तस्य अधः दक्षिणभागे निवेदकस्य नाम लिख्यते । इत्थं प्रकारेण निवेदनपत्रं पूर्णं भविष्यति ।

**छात्रहरू :** नमस्कार गुरुदेव ।

**गुरु :** नमस्कार । बस, बस ।

**छात्रहरू :** धन्यवाद गुरुदेव ।

**गुरु :** धन्यवाद । सन्चै छौ ?

**छात्रहरू :** हजुर गुरुदेव । हामी सन्चै छौँ ।

**सुप्रभा :** गुरु ! आज शुक्रबार हो । आज त सृजनात्मक लेखनको अभ्यास गराउने दिन हो नि । आज हजुरले हामीलाई के सिकाउनुहुन्छ ?

**गुरु :** हो हो सुप्रभा ! तिमीले राम्रो कुरा गऱ्यौ । आज म निवेदनपत्र लेख्न सिकाउँछु । तिमीहरूलाई निवेदनपत्रको विषयमा ज्ञान छ ?

**छात्रहरू :** छैन गुरुदेव ।

**गुरु :** ठिक छ, त्यसो भए ध्यान दिएर सुन त । जुनसुकै कार्यालयमा आफ्नो प्रयोजनका लागि निवेदनपत्र लेखिन्छ । जस्तै विद्यालयहरूमा बिदाका लागि, लब्धाङ्कपत्रका लागि चारित्रिक प्रमाणपत्रका लागि, छात्रवृत्तिका लागि, खेलकुदका सामग्रीका लागि, प्रधानाध्यापकलाई निवेदनपत्र दिइन्छ । अरू कार्यालयहरूमा पनि आफ्नो प्रयोजनका लागि निवेदनपत्र लेखिन्छ ।

निवेदनपत्र लेख्ने तरिका यसप्रकार छ -

**पहिलो चरण :** सबैभन्दा पहिले निवेदनपत्रको दाहिनेपट्टि मिति लेख्नुपर्दछ ।

**दोस्रो चरण :** निवेदनपत्रको देब्रेतर्फ जसलाई निवेदन लेखिन्छ उसको सम्बोधन र कार्यालयको नाम निर्देश गरिन्छ ।

**तेस्रो चरण :** तेस्रो चरणमा निवेदनपत्रको बिच भागमा निवेदन लेख्नुको मुख्य विषय प्रस्तुत गरिन्छ ।

**चौथो चरण :** चौथो चरणमा आफ्नो परिचय दिइन्छ र आफ्नो समस्या देखाउँदै समाधानका लागि अनुरोध गरिन्छ ।

**पाँचौँ चरण :** पाँचौँ चरणमा चौथो चरणको काम सकेर त्यसको तल्लो भागको दाहिनेतर्फ निवेदकको नाम लेखिन्छ । यसरी निवेदनपत्र पूर्ण हुने छ ।

**मूलपाठः**

# निवेदनपत्रम्

दिनाङ्कः- २०८०।०२।०५

श्रीमन्तः प्रधानाध्यापकमहोदयाः

श्री रिडी-संस्कृत-माध्यमिक-विद्यालयः

रिडी, गुल्मी

**विषयः – लब्धाङ्कप्रमाणपत्रस्य चारित्रिकप्रमाणपत्रस्य च प्राप्तिः ।**

महोदयाः,

सविनयं निवेदयामि यद् अहं अस्यैव विद्यालयस्य चतुर्थ्याः कक्षायाः वार्षिकपरीक्षायां सर्वोत्कृष्टान् अङ्कान् संप्राप्य समुत्तीर्णा छात्रा अस्मि । भवन्तः जानन्ति एव अहम् अस्य एव विद्यालयस्य संस्कृतविषयस्य अध्यापकस्य अनुराग-लामिछानेमहोदयस्य पुत्री अपि अस्मि । स्वस्य इच्छानुसारेण शिक्षाकार्यालयस्य स्वीकृतौ च काष्ठमण्डपे स्थिते रानीपोखरी-संस्कृत-माध्यमिक-विद्यालये मम पितुः स्थानान्तरणम् अभूत् । अतः अहमपि पितुः शाकं तत्र एव गत्वा तस्मिन् एव विद्यालये पठितुम् इच्छामि । आवां द्वौ अपि परश्वः काष्ठमण्डपं गमिष्यावः । वस्तुतः मम इतः काष्ठमण्डपस्य गमनम् अतीव खेदस्य विषयः अस्ति, परन्तु परिस्थितिवशात् काष्ठमण्डपं गन्तुम् अहम् उद्यता अस्मि । तस्मिन् विद्यालये प्रवेशप्राप्तये चतुर्थ्याः कक्षायाः समुत्तीर्णं लब्धाङ्कपत्रम्, चारित्रिकपत्रम् च आवश्यकं भवति । अतः मम लब्धाङ्कपत्रम्, चारित्रिकप्रमाणपत्रं च प्रेषयितुं श्रीमतां समक्षं सादरं निवेदयामि ।

भवदीया छात्रा

**सुप्रीतिः लामिछाने**

विनयपूर्वक के निवेदन गर्छु भने म यही विद्यालयकी कक्षा ४ को वार्षिक परीक्षामा सर्वोत्कृष्ट अङ्क ल्याएर उत्तीर्ण छात्रा हुँ । हजुरहरूलाई थाहा नै छ, म यसै विद्यालयका संस्कृत विषयका अध्यापक अनुराग लामिछानेकी छोरी पनि हुँ । आफ्नो इच्छाअनुसार शिक्षा कार्यालयको स्वीकृतिमा काठमाडौंमा रहेको रानीपोखरी संस्कृत माध्यमिक विद्यालयमा मेरो बुबाको सरुवा भयो । त्यसैले म पनि बुबासँग गएर त्यही विद्यालयमा पढ्न चाहन्छु । हामी पर्सि नै काठमाडौं जाने छौं । हुन त मलाई काठमाडौं जानुपर्दा निकै दुःख लागेको छ तर पनि परिस्थितिले काठमाडौं जान विवश छु । त्यो विद्यालयमा प्रवेश पाउन कक्षा ४ को लब्धाङ्क र चारित्रिक प्रमाणपत्र प्राप्तिका लागि हजुरसमक्ष सादर निवेदन गर्दछु ।

हजुरकी आज्ञाकारी छात्रा

**सुप्रीति लामिछाने**

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| सविनयम् | विनयसहितम् | विनयपूर्वक | Politely, modestly |
| सर्वोत्कृष्टान् | उत्कृष्टतमान् | सबैभन्दा उत्कृष्ट | Most excellent, superlative |
| समुत्तीर्णा | उत्तीर्णा | उत्तीर्ण भएकी | Passed |
| स्थानान्तरणम् | स्थानपरिवर्तनम् | स्थान परिवर्तन | Transfer |
| पठितुम् | पठनाय | पढ्नका लागि | To read |
| खेदम् | दुःखम् | दुःख | Regret |
| लब्धाङ्कपत्रम् | प्राप्ताङ्कपत्रम् | प्राप्ताङ्कपत्र | Score sheet, mark–sheet |
| चारित्रिकपत्रम् | चरित्रविषयकं पत्रम् | चरित्रसम्बन्धी पत्र | Character certificate |

# अभ्यासः

## श्रवणं भाषणं च

१. **अधो लिखितान् शब्दान् स्पष्टम् उच्चारयत**

समुत्तीर्णा, स्थानान्तरणम्, चारित्रिकपत्रम्, चतुर्थ्याः, सम्प्राप्य, काष्ठमण्डपम्

२. **शिक्षकस्य मुखात् निवेदनपत्रं श्रुत्वा तस्य अर्थं विचारयत ।**

३. **पाठे प्रदत्तं निवेदनपत्रं क्रमेण एकाकी श्रावयत ।**

४. **अधः प्रदत्तम् निवेदनपत्रं पठित्वा शिक्षकं श्रावयत**

दिनाङ्काः-२०८०-०२-२२

श्रीमन्तः प्रधानाचार्यमहोदयाः
श्रीहिलेपानी-संस्कृत-माध्यमिक-विद्यालयः
कालिञ्चोकग्रामपालिका

**विषयः – अवकाशस्य प्राप्तिः ।**

महोदयाः,

मम निवेदनम् अस्ति यद् अहं अस्य एव विद्यालयस्य पञ्चमकक्षायाम् अधीयानः छात्रः वैभवः श्रेष्ठः अस्मि । मार्गशीर्षमासस्य पञ्चविंशतितमे(२५) दिनाङ्के मम भगिन्याः विवाहोत्सवः अस्ति । भगिन्याः विवाहे अनुजः आवश्यकः खलु । अतः त्रयोविंशतिदिवसाद् आरभ्य पञ्चदिनपर्यन्तम् अवकाशार्थं श्रीमतां समक्षं हार्दं निवेदयामि । तदानीं खण्डितान् पाठान् पश्चाद् आगत्य पूरयिष्यामि ।

भवदीयः छात्रः
**वैभवः श्रेष्ठः**

मेरो निवेदन यो छ कि म यही विद्यालयको पाँच कक्षामा अध्ययनरत छात्र वैभव श्रेष्ठ हुँ । मङ्सिर महिनाको २५ गते मेरी दिदीको विवाह छ । दिदीको विवाहमा भाइ आवश्यक पर्दछ नै । त्यसैले २३ गतेदेखि पाँच दिनसम्म बिदाका लागि हजुरसमक्ष यो निवेदन पेस गरेको छु ।

त्यस बेला छुटेका पाठहरू पछि आएर पूरा गर्ने छु ।

हजुरको छात्र

**वैभव श्रेष्ठ**

**५. अधो लिखितानां शब्दानां नेपालीभाषायाम् अर्थं श्रावयत**

दिनाङ्कः, उद्यतः, अतीव, तत्र एव, परश्वः, गन्तुम्

**६. पाठस्य आधारेण सत्यकथने 'आम्', असत्यकथने च 'न' इति वदत**

(क) सुप्रीतिः काष्ठमण्डपस्य गमने उद्यता अस्ति ।

(ख) सुप्रीतिः शिक्षिका अस्ति ।

(ग) सुप्रीतेः पिता सामाजिकविषयस्य अध्यापकः अस्ति ।

(घ) सा सर्वोत्कृष्टान् अङ्कान् सम्प्राप्य समुत्तीर्णा छात्रा अस्ति ।

(ङ) सा छात्रवृत्तिप्राप्त्यर्थं निवेदयति ।

**७. श्रवणपाठं श्रुत्वा रिक्तस्थानं पूरयत**

यस्मिन् कस्मिन् अपि कार्यालये स्वस्य .......निवेदनपत्रं लिख्यते । यथा विद्यालयादिषु ......... कृते अवकाशार्थम्, लब्धाङ्कपत्रार्थम्, चारित्रिकपत्रार्थम्, ....... छात्रवृत्तीनां, आवश्यक-क्रीडासामग्रीणां च कृते ............ निवेदनपत्रं प्रदीयते ।

## पठनम्

१. **अधः प्रदत्तान् शब्दान् शुद्धं पठित्वा अर्थान् वदत**

समुत्तीर्णम्, प्रेषयितुम्, स्थानान्तरणम्, चारित्रिकपत्रम्, सर्वोत्कृष्टान्

२. **पाठे प्रदत्तं निवेदनपत्रं निरवच्छिन्नं पठत ।**

३. **पाठस्याधारेण शुद्धान् शब्दान् चिनुत**

| | | |
|---|---|---|
| (क) (अ) परीक्षा | (आ) परिछ्या | (इ) परीक्षा |
| (ख) (आ) उत्तिर्णा | (आ) उत्तीर्णा | (इ) उतीर्णा |
| (ग) (अ) विषयः | (आ) विसयः | (इ) बिषयः |
| (घ) (अ) प्रवेशः | (आ) प्रवेषः | (इ) प्रवेसः |
| (ङ) (अ) स्रीमान् | (आ) श्रीमान् | (इ) श्रिमान् |

४. **अधः प्रदत्तस्य निवेदनपत्रस्य द्रुतपठनं कुरुत**

दिनाङ्कः -२०८०/०२/०५

श्रीमन्तः शैक्षिकव्यवस्थापकाः

श्रीहरिहरसंस्कृतविद्यालयः

पोखराथोक, अर्घाखाँची

**विषयः क्रीडासामग्रीणां प्राप्तिः ।**

महोदयाः,

अहं अस्यैव विद्यालयस्य पञ्चम्यां कक्षायाम् अधीयाना कक्षाप्रमुखा छात्रा अर्पणा गौतम अस्मि । विद्यार्थिजीवने पठनम् अतिरिच्य क्रीडायाः अपि अधिकं

महत्त्वम् अस्ति । अस्माकं विद्यालये क्रीडाङ्गणम् अस्ति परन्तु क्रीडासामग्रीणाम् अभावः अस्ति । अतः अस्माकं क्रीडाप्रसङ्गे द्विसङ्ख्यात्मकं पादकन्दुकं हस्तकन्दुकं च आवश्यकम् अस्ति । एतदर्थम् अस्माकं कृते पूर्वोक्तक्रीडासामग्रीः प्रेषयितुं श्रीमतां समक्षं हार्दं निवेदयामि ।

भवदीया छात्रा
**अर्पणा गौतम**
कक्षाप्रमुखा

हजुरलाई थाहा नै छ, म यसै विद्यालयकी कक्षा पाँचमा अध्ययनरत कक्षाप्रमुख छात्रा अर्पणा गौतम हुँ। विद्यार्थी जीवनमा पढाइबाहेक खेलकुदको पनि धेरै महत्त्व छ । हाम्रो विद्यालयमा खेलमैदान छ तर खेलकुद सामग्रीको अभाव छ । त्यसैले हामीलाई खेल्नका लागि दुई दुईओटा भलिबल र फुटबल आवश्यक छ । यसैकारण हाम्रा लागि मागबमोजिमका खेलकुद सामग्री उपलब्ध गराइदिनुहुन विनम्र निवेदन गर्दछु ।

हजुरकी छात्रा
**अर्पणा गौतम**
(कक्षाप्रमुख)

**५. अधः प्रदत्तानि उत्तराणि पठित्वा प्रश्नान् निर्मात**

(क) अर्पणा श्रीहरिहरसंस्कृतविद्यालयस्य छात्रा अस्ति ।

(ख) क्रीडायाः अधिकं महत्त्वम् अस्ति ।

(ग) विद्यालये विशालं क्रीडाङ्गणम् अस्ति ।

(घ) अर्पणा पञ्चम्यां कक्षायाम् अधीयाना छात्रा अस्ति ।

(ङ) अर्पणा कक्षाप्रमुखा छात्रा अस्ति ।

**६. अधो लिखितानां शब्दानाम् अर्थं वदत**

कक्षाप्रमुखा, अतिरिच्य, क्रीडाङ्गणम्, हार्दम्, पादकन्दुकम्, हस्तकन्दुकम्

**७. उपरि प्रदत्तं निवेदनपत्रं पठित्वा एकपदेन उत्तरं दत्त**

(क) अर्पणायाः विद्यालयः कुत्र अस्ति ?

(ख) छात्राणां क्रीडनाय किम् आवश्यकम् अस्ति ?

(ग) छात्रा कस्मै निवेदयति ?

(घ) विद्यालये क्रीडाङ्गणम् अस्ति वा न ?

(ङ) कस्मिन् जीवने क्रीडायाः महत्त्वं भवति ?

## लेखनम्

**१. पाठस्य अनुलेखनं कुरुत ।**

**२. नेपालीभाषायाम् अर्थं लिखत**

सम्प्राप्य, जानन्ति, अध्यापकः, स्थानान्तरणम्, परश्वः, पठितुम्, समुत्तीर्णम्, प्रेषयितुम् ।

**३. पाठस्य आधारेण पूर्णवाक्येन उत्तरं लिखत**

(क) निवेदनपत्रस्य विषयः कः ?

(ख) निवेदनपत्रलेखिका का ?

(ग) पत्रलेखिकायाः खेदस्य विषयः कः ?

(घ) पितुः स्थानान्तरणविद्यालयस्य नाम किम् ?

(ङ) सुप्रीतिः कतमां कक्षाम् उत्तीर्णा वर्तते ?

(च) सुप्रीतिः किमर्थं निवेदयति ?

४. **परस्परं मेलयत**

| | |
|---|---|
| पञ्चमी | विषयः |
| चारित्रिकम् | विद्यालये |
| खेदस्य | कक्षा |
| सादरम् | प्रमाणपत्रम् |
| अध्यापनरते | निवेदयति |

५. **कोष्ठकात् समुचितपदं विचित्य रिक्तस्थानं पूरयत**

निवेदनपत्रम्, काष्ठमण्डपम्, पितुः, स्वयमेव, अध्यापकः

(क) .......... पाठं पाठयति ।

(ख) रमा अवकाशप्राप्तये ......... लिखति ।

(ग) दीप्तिः स्वस्य कार्यं .......... करोति ।

(घ) माता परश्वः ........ गन्ता ।

(ङ) पुत्रः........शाकं भ्रमणाय गच्छति ।

६. **अधो निर्दिष्टान् शब्दान् प्रयुज्य वाक्यानि रचयत**

स्वस्य, गन्तुम्, आवाम्, परन्तु, गत्वा, अतीव, पितुः

## ७. प्रदत्तं निवेदनपत्रं पठित्वा एकवाक्येन उत्तरयत

दिनाङ्का:-२०८०/०२/२०

श्रीमन्त: प्रधानाचार्यमहोदया:
महर्षि-वेदव्यास-संस्कृत-विद्यालय:
तनहुँमण्डलम् ।

**विषय: - छात्रवृत्तीनां प्राप्ति: ।**

महोदया:,

सविनयं निवेदयामि यद् अहं अस्यैव विद्यालयस्य पञ्चम्या: कक्षाया: छात्र: सौरभचौधरी अस्मि । बाल्यावस्थायाम् एव मम पिता परलोकं गतवान् । अहं मात्रा सह अस्मि । इत: पूर्वं मम माता वनकार्यालये कार्यं करोति स्म । परन्तु अधुना प्रतिकूलस्वास्थ्यस्य कारणात् सा किमपि कर्तुं न शक्नोति । सा गृहे एव तिष्ठति । इदानीम् अस्माकम् आर्थिकावस्था न्यूना अस्ति । मम पठने अपि काठिन्यं वर्तते । तस्मात् छात्रवृत्तिप्राप्त्यर्थं श्रीमतां समक्षं सादरं निवेदयामि । मम एतादृशीम् अवस्थां परिज्ञाय अवश्यम् एव मह्यं छात्रवृत्तिं प्रदास्यते इति अहं विश्वसीमि ।

भवदीय: छात्र:
**सौरभचौधरी**

विनयपूर्वक यो निवेदन गर्छु कि म यही विद्यालको कक्षा पाँचमा अध्यनरत छात्र सौरभ चौधरी हुँ । बाल्यकालमा नै मेरो पिता परलोक हुनुभयो । म आमासँग नै घरमा बसेको छु । आजभन्दा पहिले मेरी आमा वन कार्यालयमा कार्यरत हुनुहुन्थ्यो तर अहिले बिरामीका कारण केही पनि गर्न सक्नुहुन्न । उहाँ घरमा नै बस्नुहुन्छ । अहिले हाम्रो आर्थिक अवस्था अत्यन्त नाजुक छ । मलाई पढ्नका लागि पनि धेरै कठिन छ । त्यसैले छात्रवृत्ति पाउनका लागि हजुरसमक्ष यो निवेदनपत्र पेस गरेको छु । मेरो यस्तो अवस्था बुझेर यहाँले मलाई अवश्य नै छात्रवृत्ति प्रदान गर्नुहुने छ भन्ने कुरामा म विश्वस्त छु ।

हजुरको विद्यार्थी
**सौरभ चौधरी**

(क) कः कस्मै निवेदयति ?

(ख) निवेदनपत्रस्य विषयः कः ?

(ग) सौरभस्य आर्थिकावस्था कीदृशी अस्ति ?

(घ) सौरभस्य पिता अस्ति न वा ?

(ङ) सौरभस्य माता कीदृशी अस्ति ?

**८. पाठस्य निवेदनपत्रस्य श्रुतलेखनं कुरुत ।**

**९. निवेदनपत्रं कथं लिख्यते ? पञ्चभिर्वाक्यैः लिखत ।**

**१०. पाठस्याधारेण घटनाक्रमं मेलयत**

(क) स्वस्य इच्छानुसारेण शिक्षाकार्यालयस्य स्वीकृतौ च काष्ठमण्डपे स्थिते रानीपोखरी-संस्कृत-माध्यमिक-विद्यालये मम पितुः स्थानान्तरणम् अभूत् ।

(ख) अहम् अस्य एव विद्यालयस्य संस्कृतविषयस्य अध्यापकस्य अनुराग-लामिछानेमहोदयस्य पुत्री अपि अस्मि ।

(ग) मम लब्धाङ्कपत्रम्, चारित्रिकप्रमाणपत्रं च प्रेषयितुं श्रीमतां समक्षं सादरं निवेदयामि ।

(घ) अहमपि पितुः शाकं तत्र एव गत्वा तस्य अध्यापनरते तस्मिन् एव विद्यालये पठितुम् इच्छामि ।

(ङ) अहं अस्य एव विद्यालयस्य चतुर्थ्याः कक्षायाः वार्षिकपरीक्षायां सर्वोत्कृष्टान् अङ्कान् संप्राप्य समुत्तीर्णा छात्रा अस्मि ।

(च) तस्मिन् विद्यालये प्रवेशप्राप्तये चतुर्थ्याः कक्षायाः समुत्तीर्णं लब्धाङ्कपत्रम्, चारित्रिकपत्रम् च आवश्यकं भवति ।

११. **कोष्ठकस्य सङ्केतं विचार्य समुचितैः पदैः अधस्तनं संवादं पूरयत**

**हेमः** ............ ! प्रातः एकाकिनी त्वं कुत्र गच्छन्ती असि ? (आयुषा, सम्बोधनम्, एकवचनम्)

**आयुषा :** अरे हेम ! त्वम् अपि अत्र ! अहं तु .......... कर्तुं अत्र आगता । त्वम् अपि अद्य अत्र दृष्टः । (व्यायाम, द्वितीयायाः एकवचनम्)

**हेम :** ......... तु उद्यानं द्रष्टुम् आगतः अस्मि । (अस्मत्, प्रथमायाः एकवचनम्)

**आयुषा :** साधु । प्रातःकालिकः वायुः स्वस्थकरः भवति । अतः ........ प्रातर्भ्रमणं कर्तव्यम् । (सर्व, तृतीयायाः बहुवचनम्)

**हेम :** त्वं सदा व्यायामाय अत्र ........... किल ? (आ गम्, लट्, मध्यमपुरुषः, एकवचनम्)

**आयुषा :** अवश्यम् । पश्य .......... अहम् इदानीम् अपि दीर्घं श्वसन्ती अस्मि । (धावन, तृतीया, एकवचनम्)

**हेम :** प्रातर्धावनं कृत्वा त्वया स्वकीये ............ कः लाभः अनुभूतः ? (स्वास्थ्य, सप्तमी, एकवचनम्)

**आयुषा :** शृणु, मम ......... अङ्गानि दृढतरानि सन्ति । कासज्वरादयः प्रायः मम शरीरे न दृश्यन्ते ।

आलस्यं न आगच्छति । शरीरं स्फूर्तिमत् अस्ति । व्यायामस्य ......... लाभाः मया अनुभूताः । (शरीर, षष्ठी, एकवचनम् । इदम्, प्रथमा, बहुवचनम्)

**हेम :** आयुषे ! तर्हि अहम् अपि प्रतिदिवसं प्रातर्व्यायामं ........... ? (कृ, लट्, प्रथमपुरुषः, एकवचनम्)

**आयुषा :** अवश्यम् । त्वम् अपि तथा कुरु । प्रतिदिनं व्यायामाय अत्र आगच्छ । ........... मिलित्वा व्यायामं कुर्वः । (अस्मद्, प्रथमा, द्विवचनम्)

## व्याकरणानुशीलनम्

### अयादिसन्धिनियमः

हरये नमः । विष्णवे नमः । दुष्यन्तः नायकः अस्ति । पावकः अग्निपुत्रः अस्ति । एतेषु वाक्येषु अयादिसन्धेः प्रयोगः वर्तते । अयादिसन्धौ पूर्ववर्तिनाम् ए, ओ, ऐ, औ वर्णानां स्थाने स्वरवर्णे (अचि) परे क्रमेण अय्, अव्, आय्, आव् आदेशाः भवन्ति ।

**ए - अय्** यथा - कवे ए = कव् ए ए = कव् अय् ए = कवये

**ओ - अव्** यथा - गुरो ए = गुर् ओ ए = गुर् अव् ए = गुरवे

**ऐ - आय्** यथा - शै इका = श् ऐ इका = श् आय् इका = शायिका

**औ - आव्** यथा - द्वौ एव = द्व् औ एव = द्व् आव् एव = द्वावेव

१. **यथायोग्यं सन्धिं सन्धिविच्छेदं वा कुरुत**

विष्णवे, हरे+ए, नायकः, पौ+अकः, भो+अनम्, कवये, भावकः, गै+अकः, भौ+उकः, चयनम्, साधो+ए, पायकः, भानो+ए

### कर्मकारकप्रयोगः

कर्तुः अत्यन्तम् इष्टं पदं कर्मकारकः भवति । अर्थात् कर्ता स्वक्रियया विशेषरूपेण यत् प्राप्तुम् इच्छति तत् कर्मपदं भवति । कर्मकारके द्वितीया-विभक्तिः भवति ।

यथा - प्रवीणः दुग्धं पिबति । अत्र कर्तुः अर्थात् प्रवीणस्य अभीष्टं पदं दुग्धम् अस्ति ।

२. **कोष्ठस्थस्य शब्दस्य समुचितविभक्त्यन्तपदेन रिक्तस्थानं पूरयत**

(क) कवि .... रचयति । (कविता)

(ख) बालकः ....... पिबति । (दुग्ध)

(ग) छात्र ..... करोति । (गृहकार्य)

(घ) माता ....... धारयति । (शाटिका)

(ङ) अहम् ....... पठामि । (पुस्तक)

(च) भक्तजनाः ....... अर्चन्ति । (शङ्कर)

**३. निवेदनपत्रे प्रयुक्तानि द्वितीयान्तपदानि अन्विष्य लिखत ।**

## रचनात्मकः अभ्यासः

**१. पितुः अवस्थतां प्रदर्श्य अवकाशं प्रदातुं स्वविद्यालयस्य प्रधानाध्यापकाय निवेदनपत्रं लिखत ।**

**२. लुम्बिनीक्षेत्रस्य भ्रमणाय स्वकीयविद्यालस्य प्रधानाचार्याय निवेदनपत्रं लिखत ।**

## श्रवणपाठः

यस्मिन् कस्मिन् अपि कार्यालये स्वस्य प्रयोजनाय निवेदनपत्रं लिख्यते । यथा विद्यालयादिषु छात्राणां कृते अवकाशार्थम्, लब्धाङ्कपत्रार्थम्, चारित्रिकपत्रार्थम्, तथैव छात्रवृत्तीनाम्, आवश्यक-क्रीडासामग्रीणां च कृते प्रधानाध्यापकाय निवेदनपत्रं प्रदीयते । अन्येषु कार्यालयेषु अपि स्वप्रयोजनाय निवेदनपत्रं लिख्यते । सर्वप्रथमं निवेदनपत्रस्य दक्षिणभागे दिनाङ्काः समाविश्यन्ते । निवेदनपत्रस्य वामभागे यस्मै प्रदीयते तस्य सम्बोधनम्, कार्यालयस्य नाम, स्थानं च निर्दिश्यते । निवेदनपत्रस्य मध्यभागे लेखनप्रयोजनस्य विषयः प्रस्तूयते । ततः स्वकीयं परिचयं विधाय समस्यां च प्रदर्श्य समाधानाय अनुरुद्ध्यते । तदनन्तरं पत्रस्य दक्षिणभागे निवेदकस्य नाम लिख्यते । इत्थं प्रकारेण निवेदनपत्रं पूर्णं भविष्यति ।

# चतुर्थः पाठः

**पाठप्रवेशः**

## सज्जनाः

अधः प्रदत्तान् चित्रान् वर्णयत







**मूलपाठः**

# नीतिपद्यानि

**किं कुलेन विशालेन विद्याहीनस्य देहिनः ।**
**अकुलीनोऽपि विद्यावान् देवैरपि स पूज्यते ॥**

**विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन ।**
**स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥**

**विद्यया शस्यते लोके पूज्यते चोत्तमैः सदा ।**
**विद्याहीनो नरः प्राज्ञसभायां नैव शोभते ॥**

**शिष्याज्ञानतमो हत्वा ज्ञानालोकेन सर्वदा ।**
**गुरवः सूपदेक्ष्यन्ति पूज्याः सेव्या न ते कदा ?**

**पिता करोति निःस्वार्थं पोषणं तोषणं तथा ।**
**स्मृत्वैतत् तनया नित्यं सेवेरन् तं च सर्वथा ॥**

**१**
**अन्वयः**

विद्याहीनस्य देहिनो विशालेन कुलेन किम् ? अकुलीनः अपि विद्यावान् स देवैः अपि पूज्यते ।

**सरलार्थः**

जनः विशाले कुले उत्पन्नः अस्ति परन्तु विद्याहीनो वर्तते चेत् कः लाभः ? लाभः न भवति । यस्य कुलं विशिष्टं नास्ति परन्तु स विद्वान् अस्ति चेत् सर्वेषां कृते सम्मान्यो भवति । सर्वे तम् आदरभावेन पश्यन्ति, व्यवहरन्ति च । मानवाः एव न, अपि तु देवाः अपि तं पूजयन्ति ।

मानिस ठुलो कुलमा जन्मेको छ तर विद्याले रहित छ भने के फाइदा हुन्छ र ? फाइदा हुँदैन । जसको कुल विशिष्ट छैन तर ऊ विद्वान् छ भने सबैका लागि सम्मानित हुन्छ । सबै उसलाई आदरको भावनाले हेर्छन् र व्यवहार गर्छन् । मानिसहरूले मात्र नभएर देवताहरूले पनि उसको पूजा गर्छन् ।

**२**
**अन्वयः**

विद्वत्त्वं च नृपत्वं च कदाचन तुल्यं न एव । राजा स्वदेशे पूज्यते । विद्वान् सर्वत्र पूज्यते ।

**सरलार्थः**

विद्वान् नृपः च कदापि तुल्यः न भवति यतो हि विद्वान् युक्तिपूर्णेन वचसा व्यवहारेण च सर्वान् प्रभावयति । तस्य विश्वसमाजे सर्वत्र एव पूजा भवति । नृपः तु स्वस्य देशस्य प्रजानां कृते एव नृपः भवति । तस्य सुशासनेन सन्तुष्टाः प्रजाः एव तं सम्मानयन्ति । ताः एव तस्य पूजां कुर्वन्ति न अन्ये । अतः नृपात् विद्वान् सर्वथा महान् भवति ।

विद्वान् हुनु र राजा हुनुमा समानता हुन सक्दैन । विद्वान् युक्तिपूर्ण कुरा र व्यवहारले सबैलाई प्रभावित पार्दछन् । उनको विश्वमा नै सबै ठाउँमा पूजा हुन्छ । राजा त आफ्नो देशको जनताका लागि मात्र राजा हुन्छन् । उनको असल शासनले सन्तुष्ट जनताले मात्र उनलाई सम्मान गर्दछन् । तिनीहरूले मात्र उनको पूजा गर्दछन् । त्यसैले राजाभन्दा विद्वान् सबै प्रकारले महान् हुन्छन् ।

**३**
**अन्वयः**

नरः विद्यया लोके सदा शस्यते उत्तमैः च पूज्यते । विद्याहीनः नरः प्राज्ञसभायां न शोभते एव ।

**सरलार्थः**

विद्यया जनो लोके प्रशंसितो भवति । समाजे प्रतिष्ठिताः मान्याः जनाः अपि तं पूजयन्ति । विद्याहीनः अज्ञानी जनः प्राज्ञसभायां सम्यक् वक्तुं व्यवहर्तुं च न जानाति । अतः जनसम्मर्दे विद्वत्सभायां च स शोभां न प्राप्नोति । विद्वज्जनस्य समुपस्थितिः एव सभायाः सौन्दर्यं वर्धयति ।

विद्याले मानिस संसारमा प्रसिद्ध हुन्छ । समाजका प्रतिष्ठा प्राप्त गरेका विशिष्ट व्यक्तिहरू पनि उसको पूजा गर्दछन् । विद्या नभएको अज्ञानी मानिस विद्वान्हरूको सभामा राम्ररी बोल्न र व्यवहार गर्न जान्दैन । त्यसैले मानिसहरूको समूहमा र विद्वान्हरूको सभामा उसको शोभा हुँदैन । विद्वान् मानिसको उपस्थितिले नै सभाको सौन्दर्य बढाउँछ ।

**४**
**अन्वयः**

गुरवः सर्वदा ज्ञानालोकेन शिष्याज्ञानतमो हत्वा सूपदेक्ष्यन्ति । ते कदा पूज्याः सेव्याः न ?

**सरलार्थः**

गुरवः ज्ञानिनः भवन्ति चेत् शिष्याः ज्ञानार्थिनः भवन्ति । गुरवः शिष्येभ्यः ज्ञानं प्रयच्छन्ति । गुरुभिः प्रदत्तं ज्ञानम् एव शिष्याणाम् अज्ञानं नाशयति । यथा प्रकाशः अन्धकारं नाशयति तथैव ज्ञानम् अज्ञानं नाशयति । तेन शिष्याः अपि ज्ञानवन्तो भवन्ति । गुरवः स्वशिष्यान् सम्यग् उपदेक्ष्यन्ति, तेभ्यः सच्छिक्षां प्रदास्यन्ति । अतः ते शिष्यैः कदा सेवनीयाः पूजनीयाः च भवन्ति इति प्रश्नः एव न उत्पद्यते । शिष्याणाम् उपकारिणः गुरवः सदैव सेवनीयाः पूजनीयाः च भवन्ति ।

गुरुहरू ज्ञानी हुन्छन् भने चेलाहरू ज्ञान प्राप्त गर्न चाहन्छन् । गुरुहरू चेलाहरूलाई ज्ञान दिन्छन् । गुरुहरूद्वारा दिइएको ज्ञानले नै चेलाहरूको अज्ञानलाई नाश गर्दछ । ज्ञानले अज्ञानलाई त्यसरी नाश गर्दछ, जसरी उज्यालोले अँध्यारोलाई । त्यसबाट चेलाहरू पनि ज्ञानी हुन्छन् । गुरुहरूले आफ्ना चेलाहरूलाई राम्ररी उपदेश दिन्छन्, तिनीहरूलाई असल शिक्षा दिन्छन् । त्यसैले तिनीहरू कहिले चाहिँ सेवा गर्न र पूजा गर्न लायक हुन्छन् भन्ने प्रश्न नै उत्पन्न हुँदैन । चेलाहरूको उपकार गर्ने गुरुहरू सधैँ नै सेवा र पूजा गर्न लायक हुन्छन् ।

**५**
**अन्वयः**

पिता निःस्वार्थं पोषणं तथा तोषणं करोति । तनया एतत् स्मृत्वा च सर्वथा तं नित्यं सेवेरन् ।

**सरलार्थः**

पिता सन्तानानां कृते अहर्निशं परिश्रमं करोति । स सदैव तेषां हितं चिन्तयति । स स्वकीयं स्वार्थं परित्यज्य तान् सेवते । निःस्वार्थभावेन एव तान् पालयति, पोषयति, सन्तोषयति च । सन्ततयः निःस्वार्थं हितकार्यं स्मृत्वा सर्वप्रकारैः पितुः सेवां कुर्वीरन् । ते नित्यं पितृसेवायै सन्नद्धाः भूत्वा तं च सन्तोषयेयुः ।

बुबा सन्तानहरूका लागि दिनरात परिश्रम गर्नुहुन्छ । उहाँ सधैँ नै उनीहरूको भलो सोच्नुहुन्छ । उहाँ आफ्नो स्वार्थ त्यागेर उनीहरूको सेवा गर्नुहुन्छ । निःस्वार्थ भावनाले नै उनीहरूको पालन गर्नुहुन्छ, पोषण गर्नुहुन्छ र उनीहरूलाई खुसी राख्नुहुन्छ । त्यसकारण सन्तानहरूले उहाँको निःस्वार्थ भलो गर्ने काम सम्झेर सबै किसिमले बुबाको सेवा गरुन् । उनीहरूले सधैँ बुबाको सेवाका लागि तत्पर रहेर उहाँलाई खुसी बनाउन् ।

## शब्दार्थाः

| | | | |
|---|---|---|---|
| देही | शरीरी | शरीर भएको | Embodied |
| विद्यावान् | विद्वान् | विद्या जानेको | Scholar |
| सम्मान्यः | आदरयोग्यः | सम्मान गर्न लायक | Honorable |
| तुल्यम् | समम् | बराबर | Equal |
| विद्वत्त्वम् | विद्यावत्त्वम् | विद्वत्ता | Erudition |
| वचसा | वचनेन | बोलीले | By words |
| नृपात् | नरेशात् | राजाबाट | From the kinग |
| नरः | मनुष्यः | मान्छे | Human |
| प्राज्ञसभायाम् | विद्वत्समाजे | विद्वान्हरूको सभामा | Scholars' assembly |
| जनसम्मर्दे | जनसमूहे | भिडमा | In crowd |
| हत्वा | विनाश्य | नाश गरेर | By eliminating |
| उत्पद्यते | जन्यते | उत्पन्न हुन्छ | Evokes |
| निःस्वार्थम् | स्वार्थरहितम् | स्वार्थरहित | Selfless |
| तनयाः | सन्ततयः | सन्तानहरू | Offsprings |
| स्मृत्वा | विचिन्त्य | सम्झेर | By remembering |
| सन्नद्धाः | तत्पराः | तयार | Ready |

## अभ्यासः

### श्रवणं भाषणं च

१. **शिक्षकमुखात् श्रुत्वा पदानि अनूच्चारयत**

विद्याहीनस्य, अकुलीनः, विद्यावान्, सम्मान्यः, विद्वत्त्वम्, युक्तिपूर्णेन, सम्मानयन्ति, शस्यते, प्राज्ञसभायाम्, जनसम्मर्दे, समुपस्थितिः, सूपदेक्ष्यन्ति, सच्छिक्षाम्, निःस्वार्थम्, स्मृत्वा, अहर्निशम्, सन्तोषयेयुः

२. **पाठस्थान् श्लोकान् शिक्षकमुखात् श्रुत्वा यथालयम् अनुवाचयत ।**

३. **पाठस्य अन्तिमं श्लोकं सस्वरं पठित्वा सखीनां साहाय्येन क्रियापदानि अन्विषत ।**

४. **प्रदत्तस्य चित्रस्य नेपालीभाषायां वर्णनं श्रावयत**




५. **अधस्तनानि भूतकालस्य क्रियापदानि यथेच्छं प्रयुज्य एकैकं वाक्यं कक्षायां श्रावयत**

अभवत्, अहसत्, अपठत्, अगच्छत्, अक्रीडत्, अलिखत्, अखादत्, अभ्रमत्, अरचयत् ।

६. **वाक्यानि श्रुत्वा पाठाधारेण समीचीनम्, असमीचीनं वा कथयत**

(क) विद्वान् धनेन सर्वान् प्रभावयति ।

(ख) प्रजाः सुशासकं राजानं पूजयन्ति ।

(ग) अज्ञानी जनः सभायां वक्तुं न शक्नोति ।

(घ) प्राज्ञसभायाम् अज्ञस्य उपस्थितिः लाभकरी न ।

(ङ) जनाः विद्वज्जनेन सह आदरभावेन व्यवहरन्ति ।

(च) समाजे शिक्षिताः जनाः मूर्खं पूजयन्ति ।

(छ) विद्वान् युक्तिपूर्णं वचनं ब्रूते ।

७. **पाठस्य प्रथमश्लोकं श्रुत्वा अन्वयं कथयत ।**

८. **प्रदत्तं श्लोकांशं श्रुत्वा सखिभिः सह आशयं विमृशत**

कुपुत्रो जायेत क्वचिदपि कुमाता नभवति ।

खराब सन्तान जन्मन सक्छ तर कहीँ पनि खराब आमा हुन्नन् ।

९. **श्रवणपाठस्य श्रवणेन परस्परं मेलयित्वा अभ्यासपुस्तिकायां वाक्यानि लिखत**

| | |
|---|---|
| उपाध्यायः | परिश्रमं करोति । |
| आचार्यः | वृत्त्यर्थम् अध्यापयति । |
| पिता | महत्त्वं सर्वोपरि वर्तते । |
| माता | वेदं सरहस्यम् अध्यापयति । |
| मातुः | सन्ततिं जनयति । |

## पठनम्

१. **पाठस्य श्लोकान् पठित्वा परस्परं मेलयत**

| | |
|---|---|
| विद्वत्त्वं च नृपत्वं च | विद्याहीनस्य देहिनः |
| विद्याहीनो नरः प्राज्ञ- | देवैरपि स पूज्यते |
| किं कुलेन विशालेन | नैव तुल्यं कदाचन |
| विद्यया शस्यते लोके | विद्वान् सर्वत्र पूज्यते |
| अकुलीनोऽपि विद्यावान् | सभायां नैव शोभते |
| स्वदेशे पूज्यते राजा | पूज्यते चोत्तमैः सदा |

२. **अधस्तनानां सन्धियुक्तानां पदानां सन्धिच्छेदं पठित्वा शिक्षकं श्रावयत**

(क) अकुलीनोऽपि = अकुलीनः+अपि (ख) देवैरपि = देवैः + अपि

(ग) चोत्तमैः = च + उत्तमैः (घ) विद्याहीनो नरः=विद्याहीनः + नरः

(ङ) नैव = न + एव

३. **पाठस्य तृतीयं श्लोकं सस्वरं पठत ।**

४. **अधस्तनं पद्यं सलयं पठित्वा क्रोधस्य विषये कक्षायां विमृशत**

क्रोधाद् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः ।

स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥

रिसले सम्मोह (गर्नुपर्ने र नगर्नुपर्ने कुराबारे विचार गर्न नसक्ने अवस्था) उत्पन्न हुन्छ । सम्मोहबाट स्मृतिभ्रम (शास्त्रले बताएका कुरामा अन्योल) उत्पन्न हुन्छ । स्मृतिभ्रमबाट बुद्धिको नाश हुन्छ र बुद्धिको नाशबाट मनुष्य आफैँ नष्ट हुन्छ ।

५. **प्रदत्तम् अनुच्छेदं प्रथमं सस्वरं तदनु मौनं पठित्वा प्रश्नान् उत्तरयत**

वृक्षाः प्राणिभ्यः फलं यच्छन्ति । ते जन्तुभ्यः पत्राणि प्रयच्छन्ति । वृक्षेभ्यः प्राणवायुः मिलति । वृक्षाः मूलेन मृत्तिकां संरक्षन्ति । अतः भूस्खलनं न भवति । जनाः वृक्षस्य मूलभागं शाखां च काष्ठरूपेण प्रयुञ्जन्ति । गृहादिषु द्वारनिर्माणाय गवाक्षनिर्माणाय च काष्ठस्य प्रयोगः भवति । वृक्षाः जीवान् सर्वथा उपकुर्वन्ति । साधवः अपि प्राणिनः उपकुर्वन्ति । अतः साधवः वृक्षसदृशाः उपकारिणः इत्थं वृक्षाः साधुसदृशाः भवन्ति । वृक्षाः न वदन्ति परन्तु मौनेन अपि परोपकारं शिक्षयन्ति । वृक्षाणां मूलतः अग्रभागपर्यन्तं सर्वं अन्येषां प्रयोजनाय भवति । वयम् अपि सदा परोपकाराय सन्नद्धाः भवेम ।

(अ) एकपदेन उत्तरं लिखत

(क) वृक्षाः प्राणिभ्यः किं यच्छन्ति ?

(ख) जन्तवः वृक्षेभ्यः किं प्राप्नुवन्ति ?

(ग) द्वारनिर्माणाय कस्य प्रयोगः भवति ?

(घ) साधुजनः केन सदृशः भवति ?

(ङ) अनुच्छेदे प्रयुक्तं 'प्राणिभ्यः' इति पदं कस्याः विभक्तेः रूपम् अस्ति ?

(आ) पूर्णवाक्येन उत्तरं लिखत

(क) वृक्षेभ्यः मनुष्याः किं किं प्राप्नुवन्ति ?

(ख) कथं भूस्खलनं न भवति ?

(ग) काष्ठस्य प्रयोगः कस्मै प्रयोजनाय भवति ?

(घ) वृक्षाणां साधूनां च कस्मिन् कार्ये समानता भवति ?

(ङ) वृक्षाः कथं परोपकारं शिक्षयन्ति ?

रुखहरू प्राणीहरूलाई फल दिन्छन् । तिनीहरू जन्तुहरूलाई पात दिन्छन् । रुखहरूबाट अक्सिजन मिल्दछ । रुखहरू जराले माटोलाई जोगाएर राख्दछन् । त्यसबाट पहिरो जाँदैन । मानिसहरू रुखको मुख्य भाग र हाँगालाई काठका रूपमा प्रयोग गर्दछन् । घर आदिमा ढोका र झ्याल बनाउन काठको प्रयोग हुन्छ । रुखहरूले प्राणीहरूको सबै प्रकारले उपकार गर्दछन् । साधुहरूले पनि प्राणीहरूको उपकार गर्दछन् । त्यसैले सज्जनहरू रुखजस्तै उपकारी हुन्छन् । रुखहरू बोल्दैनन् तर चुप लागेरै अरूको उपकार गर्न सिकाउँछन् । रुखहरूको जरादेखि टुप्पोसम्म सबै कुरा अरूको प्रयोगका लागि हुन्छन् । हामी पनि सधैँ अरूको उपकारका लागि तयार रहौँ ।

**६. पाठस्य प्रथमं श्लोकं पठित्वा अन्वयं कुरुत ।**

**७. नीतिपद्यं पठित्वा अधस्तनौ कार्यकलापौ कुरुत**

वृथा वृष्टिः समुद्रेषु वृथा तृप्तस्य भोजनम् ।
वृथा दानं समर्थाय वृथा दीपो दिवापि च ॥

**(अ) एकवाक्येन उत्तरयत**

(क) वृष्टिः कुत्र वृथा भवति ?

(ख) दीपः कदा वृथा भवति ?

(ग) कस्मै दानं वृथा मन्यते ?

(घ) तृप्तस्य किं वृथा मन्यते ?

**(आ) निर्देशानुसारेण उत्तरयत**

(क) 'समुद्रेषु' अत्र किं वचनं प्रयुक्तम् ?

(ख) नीतिपद्ये 'व्यर्थम्' इत्यर्थे किं पदम् आगतम् ?

(ग) 'तृप्तस्य' इत्यस्य विभक्तिः का ?

(घ) नीतिपद्याद् इकारान्तं पदं चित्वा लिखत ।

समुद्रमा वर्षा हुनु व्यर्थ हुन्छ । अघाएर तृप्त भएको मान्छेका लागि खाना व्यर्थ हुन्छ । समर्थ मान्छेलाई दान दिनु व्यर्थ हुन्छ । दिउँसो बत्ती पनि व्यर्थ नै हुन्छ ।

**८. पाठस्य प्रथमद्वितीयौ श्लोकौ पठित्वा अव्ययपदानि क्रियापदानि च सङ्कलय्य तेषाम् अर्थम् अन्विषत ।**

## लेखनम्

**१. पाठस्य अन्तिमश्लोकस्य अनुलेखनं कुरुत ।**

**२. पुस्तकं शब्दकोशं शिक्षकसहयोगं वा अवलम्ब्य शब्दानाम् अर्थं नेपालीभाषायां लिखत**

देहिनः, तुल्यम्, शस्यते, प्राज्ञसभायाम्, हत्वा, सेवेरन्

**३. अधस्तनपदानां स्वशब्दैः वाक्येषु प्रयोगं दर्शयत**

सभा, विद्यावान्, शोभते, नराः, देवः, कदाचन, कुलम्, लोकेषु

**४. विपरीतार्थकपदानि परस्परं मेलयित्वा लिखत**

| | |
|---|---|
| विशालम् | अज्ञत्वम् |
| विद्यावान् | एकत्र |
| विद्वत्त्वम् | लघु |
| सर्वत्र | विद्याहीनः |
| स्वदेशः | निन्द्यते |
| शस्यते | अधमः |
| उत्तमः | अकुलीनः |
| कुलीनः | विदेशः |

५. **पाठस्य चतुर्थश्लोकस्य सरलार्थं लिखत ।**

६. **अधस्तनानां पदानाम् अशुद्धिं संशोध्य लिखत**

सस्यते, शोभाते, विद्याहिनः, अपी, बिशालेन, सार्वत्र, ऊत्तमः, शभायाम्, नृपत्त्वम्, पुज्यते, विद्धान्, अकूलीनः, विध्यावान्

७. **'विद्या सफलतायाः कारणम्' इति विषये पाठाधारेण पञ्च वाक्यानि लिखत ।**

८. **पाठस्थं सरलार्थम् आधृत्य एकपदेन प्रश्नान् उत्तरयत**

(क) जना विद्वांसं कथं पश्यन्ति ?

(ख) कयोः समानता भवितुं नार्हति ?

(ग) विद्वान् कस्माद् श्रेष्ठः भवति ?

(घ) लोके जनः कया प्रशंसितः भवति ?

९. **सरलार्थाधारेण एकवाक्येन प्रश्नान् उत्तरयत**

(क) को देवानाम् अपि पूज्यः भवति ?

(ख) कुत्र विदुषः पूजा भवति ?

(ग) केन सन्तुष्टाः प्रजाः राजानं सम्मानयन्ति ?

(घ) विद्वज्जनस्य समुपस्थितिः सभायाः किं वर्धयति ?

(ङ) कीदृशाः जनाः अपि विद्वांसं पूजयन्ति ?

(च) कार्यक्रमे कस्य उपस्थित्या सौन्दर्यं न वर्धते ?

## व्याकरणानुशीलनम्

१. **प्रदत्तानि धातुरूपाणि पठित्वा अभ्यासपुस्तिकायाम् अनुलिखत**

पठ्-धातोः भूतकाले (लङ्-लकारे) रूपाणि-

| | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| **प्रथमः पुरुषः** | अपठत् | अपठताम् | अपठन् |
| **मध्यमः पुरुषः** | अपठः | अपठतम् | अपठत |
| **उत्तमः पुरुषः** | अपठम् | अपठाव | अपठाम |

लभ्-धातोः भूतकाले (लङ्-लकारे) रूपाणि-

| | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| प्रथमः पुरुषः | अलभत | अलभेताम् | अलभन्त |
| मध्यमः पुरुषः | अलभथाः | अलभेथाम् | अलभध्वम् |
| उत्तमः पुरुषः | अलभे | अलभावहि | अलभामहि |

२. **उपरितनानि धातुरूपाणि उदाहरणं च अनुसृत्य धातुरूपं परिवर्तयत**

यथा- खाद्- अखादत्    लिख्- अलिखत्    वद्- अवदत्

गम् (गच्छ्)- अगच्छत्    स्था (तिष्ठ्)-अतिष्ठत्    भू (भव्)- अभवत्

एध्- ऐधत    वन्द्- अवन्दत    सेव् - असेवत

| | | |
|---|---|---|
| क्रीड्- अक्रीडः | पा (पिब्)- ............ | दृश् (पश्य्)- ............ |
| गम् (गच्छ्) - .............. | वस्- अवसम् | लिख्- ................. |
| भज्- ................. | धाव्- .............. | आगम् (आगच्छ्)- आगच्छन् |
| निवस्- न्यवसाम | पा (पिब्)- ............ | स्था (तिष्ठ्)- .............. |
| एध्- ऐधथाः | वन्द्- ................. | सेव् - ...................... |
| वन्द्- ................. | स्पर्ध्- अस्पर्धे | एध्- ........................ |

३. **गम् (गच्छ्)-धातोः पठ्-धातुवत् लङ्लकारे रूपाणि लिखत ।**

४. **याच्-धातोः लभ्-धातुवत् लङ्-लकारे (लङि) रूपाणि लिखत ।**

५. **शिक्षकाद् यथावश्यकं साहाय्यम् अवाप्य परस्परं मेलयत**

| | |
|---|---|
| सः/सा/तत्/छात्रः | अलिखः |
| तौ/ते/ते/छात्रौ | अधावन् |
| ते/ताः/तानि/छात्राः | अवसताम् |
| त्वम् | अवदम् |
| युवाम् | असेवध्वम् |
| यूयम् | अलभामहि |
| अहम् | अहसत् |
| आवाम् | अभ्रमतम् |
| वयम् | अक्रीडाव |

६. **प्रदत्तानि शब्दरूपाणि पठित्वा अभ्यासपुस्तिकायाम् अनुलिखत**

चतुर्थी विभक्तिः (सम्प्रदानकारकप्रयोगः)

**(क) अकारान्तपुंलिङ्गस्य रूपाणि**

| **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|
| बालकाय | बालकाभ्याम् | बालकेभ्यः |

**(ख) आकारान्तस्त्रीलिङ्गस्य रूपाणि**

| **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|
| बालिकायै | बालिकाभ्याम् | बालिकाभ्यः |

**(ग) इकारान्तपुंलिङ्गस्य रूपाणि**

| **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|
| हरये | हरिभ्याम् | हरिभ्यः |

**(घ) ईकारान्तस्त्रीलिङ्गस्य रूपाणि**

| **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|
| भगिन्यै | भगिनीभ्याम् | भगिनीभ्यः |

**(ङ) अकारान्तनपुंसकलिङ्गस्य रूपाणि (पुंलिङ्गवत्)**

| **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|
| फलाय | फलाभ्याम् | फलेभ्यः |

**(च) अस्मद्-शब्दस्य रूपाणि**

| **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|
| मह्यम् | आवाभ्याम् | अस्मभ्यम् |

**(छ) युष्मद्-शब्दस्य रूपाणि**

| **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|
| तुभ्यम् | युवाभ्याम् | युष्मभ्यम् |

**(छ) तद्-शब्दस्य रूपाणि**

| **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** | |
|---|---|---|---|
| तस्मै | ताभ्याम् | तेभ्यः | (पुंलिङ्गे) |
| तस्यै | ताभ्याम् | ताभ्यः | (स्त्रीलिङ्गे) |
| तस्मै | ताभ्याम् | तेभ्यः | (नपुंसकलिङ्गे) |

शब्दानां चतुर्थ्याः विभक्तेः रूपाणि सम्प्रदानकारकत्वेन प्रयुज्यन्ते । क्रियायाः उद्देश्यं सम्प्रदानं भवति । यस्मै कार्यं सम्पाद्यते तदेव सम्प्रदानं भवति । दानार्थे सम्प्रदानकारकस्य प्रयोगः भवति । सम्प्रदाने चतुर्थीविभक्तिः प्रयुज्यते । यथा - अहं अनुजाय पुस्तकं ददामि । पिता पुत्राय रूप्यकाणि यच्छति ।

'नमः' अस्य योगे चतुर्थी कर्तव्या । यथा- नमः शिवाय । श्रीगणेशाय नमः ।

स्वस्ति अस्य योगे चतुर्थी कर्तव्या । यथा- प्रजाभ्यः स्वस्ति । जनेभ्यः स्वस्ति ।

स्वाहा अस्य योगे चतुर्थी कर्तव्या । यथा - अग्नये स्वाहा । रूद्राय स्वाहा ।

७. **उपरितनानि रूपाणि अनुसृत्य अधस्तनानां शब्दानां चतुर्थीविभक्तेः रूपाणि लिखत**

पौत्रः सीता कविः नदी पत्रम्

८. **कोष्ठस्थसङ्केतानुसारेण चतुर्थीविभक्त्यन्तपदैः रिक्तस्थानं पूरयत**

(क) .................... नमः । (ऋषि- बहुवचने)

(ख) माता .................... भोजनं यच्छति । (पुत्री- द्विवचने)

(ग) .................... स्वाहा । (सूर्य- एकवचने)

(घ) भवान् .................... गृहकार्यं यच्छतु । (अस्मद्-बहुवचने)

(ङ) सा .................... चित्रवनं गच्छति । (भ्रमण-एकवचने)

(च) .................... स्वस्ति । (युष्मद्-द्विवचने)

(छ) .................... नमः । (तद्-स्त्रीलिङ्गे, बहुवचने)

(ज) वयम् ................. पुष्पाणि आनयामः । (पूजन-एकवचने)

(झ) श्वेतं पुष्पं .................. रोचते । (अस्मद्-एकवचने)

## रचनात्मकः अभ्यासः

१. **प्रदत्तं पद्यं गद्ये परिवर्त्य मातृपितृविषये एकम् अनुच्छेदं रचयत**

सर्वतीर्थमयी माता सर्वदेवमयः पिता ।
मातरं पितरं तस्मात् सर्वयत्नेन पूजयेत् ॥
मातरं पितरंश्चैव यस्तु कुर्यात् प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥

आमा सबै तीर्थसमान हुन्छिन् । पिता सबै देवतासमान हुन्छन् । त्यसैले आमा र बुबाको हरेक प्रयत्नबाट पूजा गरियोस् । आमा र बुबालाई जसले प्रदक्षिणा गर्दछ त्यसले सात द्वीपले युक्त पृथ्वीलाई परिक्रमा गरेको मानिन्छ ।

२. **'विद्वान्' इति शीर्षकं दत्वा पाठम् आधृत्य दशवाक्यात्मकम् अनुच्छेदं रचयत ।**

## श्रवणपाठः

सामान्यतया यः वृत्त्यर्थम् अध्यापयति स उपाध्यायः भवति । उपाध्यायः वेदस्य एकखण्डं वेदाङ्गानि वा पाठयितुं शक्नोति । उपाध्यायाद् दशगुणाधिकः आचार्यः भवति । आचार्यः शिष्यम् उपनीय वेदं सरहस्यम् अध्यापयति । एष शिष्यान् आचारम् अपि शिक्षयति । आचार्याद् अपि दशगुणाधिकः पिता भवति । पिता स्वसन्ततेः रक्षणाय पालनाय च परिश्रमं करोति । पितुः अपि सहस्रगुणाधिका माता भवति । एषा सन्ततिं जनयति, लालयति, पालयति च । सन्तत्यै सर्वस्वं प्रदाय सन्तोषयति । कदाचिद् अपि तेषाम् अहितं द्रष्टुं न शक्नोति । अतः मातुः महत्त्वं सर्वोपरि वर्तते । उक्तं च -

**उपाध्यायान् दशाचार्य आचार्याणां दशं पिता ।**
**सहस्रं तु पितृन्माता गौरवेणातिरिच्यते ॥**

**पाठप्रवेशः**

# न वयं बालकाः दीनाः

पुरा इन्द्रलोके देवदानवयोः मध्ये युद्धम् अभवत् । इन्द्रः दुष्यन्तस्य साहाय्यम् अयाचत । दुष्यन्तः इन्द्रस्य सहायतायै सशरीरः एव इन्द्रलोकं अगच्छत् । इन्द्रः दुष्यन्तस्य साहाय्येन दानवान् पराजित्य स्वस्थानं पुनः प्रापत् । पथि स मारीचस्य आश्रमं प्राविशत् । तत्र कश्चन बालकः सिंहशावकैः सह क्रीडन् आसीत् । स सिंहस्य मुखं विस्फार्य दन्तान् गणयन् आसीत् । तद् दृष्ट्वा विस्मितः दुष्यन्तः वात्सल्यभावेन बालकम् अङ्के न्यधापयत् । तदा एव विरहिणी शकुन्तला समागच्छत् । दुष्यन्तशकुन्तलयोः पुनर्मेलनम् अभवत् । स बालकः दुष्यन्तशकुन्तलयोः पुत्रः आसीत् । तौ भगवतः मारीचस्य दर्शनाय अगच्छताम् । मारीचः दम्पतिभ्याम् आशीर्वचांसि व्याहरत् । दुष्यन्तः शकुन्तला च पुत्रेण सह राजप्रासादम् अगच्छताम् । स एव बालकः सर्वदमनः भरतः आसीत् । तत्पूर्वम् अपि सर्वदमनाः नैके वीरबालकाः आसन् । अद्भुतलीलया, सुज्ञानेन, दृढतपसा, सदाचारेण च ते यशस्विनः अभवन् । तेषु केचन यथा -

## न वयं बालका दीनाः



श्रीकृष्णः वसुदेवस्य देवक्याः च पुत्रः आसीत् । सः बाल्ये एव अनेकाः लीलाः अकरोत् । अनेकान् राक्षसान् अनाशयत् । भागवते श्रीकृष्णस्य अनेकाः कथाः सन्ति ।



ध्रुवः उत्तानपादस्य पुत्रः आसीत् । तस्य माता सुनीतिः आसीत् । विमाता सुरुचिः आसीत् । सः विमातुः वचनेन दुःखितः अभवत् । पञ्चवर्षीयः एव ध्रुवः तपोबलेन भगवन्तं साक्षात्कृतवान् ।



प्रह्लादस्य पिता हिरण्यकशिपुः आसीत् । सः दैत्यः आसीत् । दैत्यकुले उत्पन्नः अपि प्रह्लादः ज्ञानी आसीत् । सः नारायणस्य भक्तः आसीत् । भक्त्या ज्ञानेन च सः नारायणं प्रासादयत् ।



अभिमन्युः अर्जुनस्य पुत्रः आसीत् । सः स्वल्पे एव वयसि अद्भुतः पराक्रमी आसीत् । महाभारतस्य युद्धे स वीरगतिं लब्धवान् । तस्य पराक्रमस्य चर्चा अद्य अपि भवति ।

अनेन ज्ञायते यद् बालाः अपि समर्थाः भवन्ति । ते अपि ज्ञानिनः भवन्ति । शक्तिशालिनां बालानां कथाः अनेकाः सन्ति । तेषु नचिकेतसः कथा उपनिषदि प्रसिद्धा वर्तते । वयम् अद्य नचिकेतसः कथां पठामः ।

परापूर्व कालमा इन्द्रलोकमा देवता र दानवहरूको बिचमा युद्ध भयो । इन्द्रले राजा दुष्यन्तसँग सहयोग मागे । दुष्यन्त इन्द्रलाई सहयोग गर्न भनी पृथिवीबाट सशरीर इन्द्रलोक गए । इन्द्रले राजा दुष्यन्तको सहयोगबाट दानवहरूलाई जिते र आफ्नो राज्य फेरि प्राप्त गरे । बाटामा उनले मारीचको आश्रम देखे र त्यहाँ प्रवेश गरे । त्यहाँ कुनै बालक सिंहसँग खेलिरहेको थियो । त्यो बालक सिंहको मुख फट्टाएर दाँत पो गनिरहेको थियो । त्यो देखेर आश्चर्यचकित भएका दुष्यन्तले बालकलाई स्नेहले आफ्नो काखमा राखे । त्यही बेला शकुन्तला त्यहाँ आइन् । दुष्यन्त र शकुन्तलाको फेरि भेट भयो । ती बालक दुष्यन्त र शकुन्तलाका पुत्र थिए । उनीहरू ऋषि मारीचको दर्शन गर्न गए । मारीचले दुवै पतिपत्नीलाई आशीर्वाद दिए । दुष्यन्त र शकुन्तला छोरालाई लिएर राजदरबार फर्किए । ती बालक सबैलाई पराजित गर्ने भरत थिए । उनीभन्दा अगाडि पनि सबैलाई पराजित गर्ने अनेक बालकहरू थिए । आफ्नो अद्भुत लीला, ज्ञान, दृढ तपस्या र सदाचारले उनीहरू कीर्तिमान् भए । तिनीहरूमध्ये केही यसप्रकार छन् -

- श्रीकृष्ण वसुदेव र देवकीका छोरा थिए । उनले बाल्यकालमा नै अनेक लीला गरे । धेरै राक्षसहरूलाई मारे । भागवतमा श्रीकृष्णका धेरै कथा छन् ।

- ध्रुव उत्तानपादका छोरा थिए । उनकी आमा सुनीति थिइन् । सौतेनी आमा सुरुचि थिइन् । सौतेनी आमाको वचनले उनी दु:खी भए । पाँच वर्षमा नै उनले तपस्या गरेर संसार जिते ।

- प्रह्लादको बाबु हिरण्यकशिपु थियो । ऊ दैत्य थियो । दैत्यको वंशमा उत्पन्न भए पनि प्रह्लाद ज्ञानी थिए । उनी भगवान् नारायणका भक्त थिए । भक्ति र ज्ञानले उनले भगवान्लाई खुसी पारे ।

- अभिमन्यु अर्जुनका छोरा थिए । उनी सानै उमेरमा अद्भुत पराक्रमी थिए । महाभारतको युद्धमा उनी मारिए । आजसम्म पनि उनको वीरताको चर्चा हुन्छ ।

यसबाट थाहा हुन्छ कि बालकहरू पनि सक्षम हुन्छन् । उनीहरू पनि ज्ञानी हुन्छन् । शक्तिशाली बालकहरूका धेरै कथा छन् । तिनीहरूमध्ये नचिकेताको कथा उपनिषद्मा प्रसिद्ध छ । हामी आज नचिकेताको कथा पढ्छौँ ।

**मूलपाठः**

# जिज्ञासुः नचिकेताः

पुरा उद्दालकनामकः एकः ऋषिः आसीत् । नचिकेताः तस्यैव पुत्रः आसीत् । एकवारम् उद्दालकः विशालं यज्ञं कृतवान् । यज्ञे स्वकीयं सर्वं वित्तं दातव्यं भवति स्म । ऋषिः दानं कुर्वन् आसीत् । बालकः नचिकेता तत् सर्वं पश्यन् आसीत् ।

अन्त्ये उद्दालकः वृद्धाः गाः अपि दातुम् आरब्धवान् । बालः सन्नपि नचिकेता बुद्धिमान् आसीत् । सः विचारितवान्, "एताः सर्वाः गावः दुग्धं न ददति । घासं खादितुम् अपि

समर्थाः न सन्ति । एतासां गवां दानेन पितुः कल्याणं न भवति । यः आददाति, सः दुग्धम् न, दुःखं प्राप्नोति ।" इति विचार्य नचिकेताः पितुः समक्षं गतवान् । स उक्तवान्, "मां कस्मै दास्यति ? अहम् अपि भवतः पुत्रः अस्मि, अतः कस्मैचन ददातु" इति । ऋषिः उद्दालकः उत्तरं न अददात् । नचिकेता पुनः पृष्टवान् किन्तु पिता किमपि न उक्तवान् । तृतीयवारं तारस्वरेण सः उक्तवान्, "पितः ! स्वस्य पुत्रं कस्मै दास्यति ?" इति । पुत्रस्य एतादृशं प्रश्नं श्रुत्वा उद्दालकः क्रुद्धः अभवत् । क्रोधवशात् सः उक्तवान्, "अहं त्वां मृत्यवे ददामि ।" इति ।



क्षणानन्तरं ऋषिः शान्तः अभवत् । स विचारितवान्, "मया किं विहितम् ?" इति । नचिकेताः तस्य पश्चात्तापं ज्ञातवान् । किन्तु तदा वचनम् अवश्यं पालनीयं भवति स्म । स उक्तवान्, "पितः ! पश्चात्तापं मा करोतु । मम माध्यमेन मृत्युदेवस्य यमस्य किमपि कर्तव्यं स्यात् । अस्माकं पूर्वतनाः पितरः अपि मृत्योः मुखे प्रविष्टाः । वयम् अपि पश्चात् मरिष्यामः । अतः शोकं मा करोतु । अहं यमस्य समक्षं गमिष्यामि । भवतः वचनं असत्यं भवितुं न अर्हति" इति । एतद् उक्त्वा नचिकेताः सशरीरं यमलोकम् अगच्छत् ।



यमः तदा स्वस्य प्रासादे न आसीत्, बहिः गतः आसीत् । अतः नचिकेता यमप्रासादं न प्राविशत् । द्वारे एव प्रतीक्षमाणः अतिष्ठत् । दिनत्रयानन्तरं यमः स्वस्य प्रासादम् आगच्छत् । यमस्य पत्नी तम् अवोचत्, "अस्माकं द्वारे कश्चन बालः अतिथिः अस्ति । स किमपि न खादति । यस्य गृहे अतिथिः बुभुक्षितः तिष्ठति, तस्य वैभवं नष्टं भवति । अतः शीघ्रं गत्वा अतिथिं प्रसादय" इति ।

यमः नचिकेतसः समक्षम् अगच्छत् । स उक्तवान्, "हे ब्रह्मचारिन् ! भवान् अस्माकम् अतिथिः अस्ति । पूज्यः अपि अस्ति । मम गृहे भवान् रात्रित्रयं अनश्नन् व्यतीतवान् । अतः अहं भवते त्रीन् वरान् ददामि । वरं वृणोतु" इति । यमस्य वचनं श्रुत्वा नचिकेता प्रसन्नः अभवत् । चतुरः नचिकेताः 'मृतः मनुष्यः न प्रत्यावर्तते' इति जानाति स्म । यदि मृतं मनुष्यं जनाः पुनः पश्यन्ति, तर्हि 'प्रेतः' इति वदन्ति । अतः सः चातुर्येण प्रथमं वरं याचितवान्, "मम पितुः उद्दालकस्य कोपः शान्तः भवेत् । मृत्योः मुखात् प्रतिगतं मां सः स्वीकुर्यात् ।" इति । प्रथमेन एवं वरेण नचिकेता वरत्रयं याचितवान्, "मृत्युमुखात् प्रत्यावर्तनम्, पितुः कोपशमनम्, पित्रा स्वस्य स्वीकारः च ।" तस्य चातुर्यं दृष्ट्वा यमः प्रसन्नः अभवत् । सः "तथास्तु" इति निगद्य प्रथमं वरम् अददात् ।

द्वितीयेन वरेण नचिकेता अग्निविद्याम् अयाचत । स्वर्गगमने अग्निविद्यायाः प्रयोगः भवति इति सः श्रुतवान् आसीत् । यमः तस्य तादृशं प्रौढत्वं दृष्ट्वा प्रसन्नः अभवत् । अतः स सहर्षम् अग्निविद्यायाः उपदेशं विहितवान् । ततः सः उक्तवान्, “नचिकेतः ! एषा अग्निविद्या तव नाम्ना एव प्रसिद्धा भविष्यति । तृतीयं वरं वृणीष्व” इति ।

इतः परं नचिकेता उक्तवान्, “यदा कश्चन म्रियते, तदा केचन ‘अस्ति’ इति वदन्ति । केचन ‘नास्ति’ इति अपि वदन्ति । कश्चन जीवः मृत्योः पश्चाद् भवति वा न ? तृतीयेन वरेण एतद् माम् उपदिश” इति । नचिकेताः बाल एव आसीत् । तस्य मुखाद् एतादृशं गभीरं प्रश्नं श्रुत्वा यमः चकितः अभवत् । सः उक्तवान्, “नचिकेतः ! त्वं बालः एव असि । एतस्य उत्तरं त्वं ज्ञातुं न शक्नोषि । पूर्वं देवाः अपि एतद् रहस्यं ज्ञातुम् ऐच्छन् । किन्तु ज्ञातुं न अशक्नुवन् । कृपया त्वं सुखम्, भूमिम्, सम्पत्तिं वा वृणीहि । मृत्योः रहस्यं न वृणीहि” इति । नचिकेताः उक्तवान्, “देवाः अपि एतद् ज्ञातुम् ऐच्छन् । एतत् सुविज्ञेयम् अपि नास्ति । किन्तु एतस्य ज्ञानस्य भवादृशः अन्यः वक्ता अपि नास्ति । अहम् अन्यत् किमपि न इच्छामि । मम तृतीयः वरः स एव” इति ।

नचिकेतसः निश्चयं श्रुत्वा यमः पुनः प्रसन्नः अभवत् । बालः अपि नचिकेता धनलुब्धः न आसीत् । स सुखभोगं कर्तुम् अपि न इच्छति स्म । ज्ञानप्राप्तये स दृढः आसीत् । दृढं नचिकेतसं यमः मृत्योः रहस्यम् उपदिष्टवान् । नचिकेताः गोपनीयं मृत्युरहस्यं यमस्य मुखात् श्रुतवान् । ततः ज्ञानी प्रसन्नश्च भूत्वा मृत्युम् अपि प्रसाद्य सः गृहं प्रत्यागच्छत् ।

धेरै पहिले उद्दालक नामका एक ऋषि थिए । उनका पुत्रको नाम नचिकेता थियो । उद्दालकले एकपटक ठुलो यज्ञ गरे । यज्ञमा आफूसँग भएको सबै धनसम्पत्ति दान गर्नुपर्थ्यो । ऋषि दान गरिरहेका थिए । बालक नचिकेता टाढाबाट यो हेरिरहेका थिए ।

अन्तिममा उद्दालकले बुढा गाइहरू पनि दान गर्न थाले । नचिकेता सानै भए पनि बुद्धिमान् थिए । उनले विचार गरे, “यी सबै गाईहरूले दुध दिँदैनन् । घाँस

खान पनि सक्दैनन् । यस्ता गाई दान गरेर पिताको कल्याण हुँदैन । जसले लिन्छ उसले पनि दुध होइन, दुःख मात्र पाउँछ ।" यस्तो विचार गरेर नचिकेता पिताको नजिक गए । उनले भने, "बुबा ! मलाई कसलाई दिएर पठाउनुहुन्छ ? म पनि हजुरको छोरो हुँ । मेरो पनि दान गर्नुहोस् ।" ऋषि उद्दालकले उत्तर दिएनन् । नचिकेताले फेरि उही प्रश्न सोधे, तर उनका पिताले उत्तर दिएनन् । त्यसपछि नचिकेताले चिच्याउँदै भने, "बुबा ! आफ्नो छोरो कसलाई दिनुहुन्छ ?" छोराको यस्तो अनौठो प्रश्न सुनेर ऋषिलाई रिस उठ्यो । उनले रिसाएर भने, "जा ! म तँलाई मृत्युलाई दिन्छु ।"

एकैछिनमा ऋषि शान्त भए । उनले मनमनै विचार गरे, "अहो ! मैले यो के गरेँ ?" नचिकेताले बुबाको पश्चात्ताप बुझे । त्यस समयमा आफूले बोलेको वचन पूरा गर्नुपर्थ्यो । नचिकेताले भने, "बुबा ! पछुतो नगर्नुहोस् । मेरो माध्यमले यमराजको केही काम सिद्ध गर्नुपर्ने होला । आखिर हाम्रा पुर्खाहरू पनि मृत्युको मुखमा गए । हामी पनि पछि मर्ने नै हो । त्यसकारण शोक नगर्नुहोस् । म मृत्युको नजिक जान्छु । हजुरको वचनलाई असत्य हुन दिनु हुँदैन ।" यसो भनेर नचिकेता जिउँदै यमलोक गए ।

यमराज त्यस बेला आफ्नो दरबारमा थिएनन् । कतै बाहिर गएका थिए । त्यसैले नचिकेता दरबारभित्र गएनन् । बाहिरै ढोकामा यमराजलाई पर्खेर बसे । तीन दिनपछि यमराज दरबार आए । यमकी पत्नीले भनिन्, "दरबारको ढोकामा एक जना बालक अतिथि आएका छन् । उनी केही पनि खाँदैनन् । जसको घरमा अतिथि भोको बस्छ त्यसको सारा सम्पत्ति नष्ट हुन्छ । त्यसैले छिटो गएर अतिथिलाई खुसी पार्नुहोस् ।"

यमराज नचिकेताको नजिक गए । उनले भने, "हे ब्रह्मचारी ! तपाईं हाम्रो अतिथि हुनुहुन्छ । त्यसकारण तपाईं पूज्य हुनुहुन्छ । मेरो घरमा तपाईं तीन रात भोकै बस्नुभयो । त्यसैले म तपाईंलाई तीनओटा वर दिन्छु । के माग्नुहुन्छ ? माग्नुहोस् ।" यमराजको कुरा सुनेर नचिकेता प्रसन्न भए । बालक भए पनि नचिकेता चलाख थिए । मरेको मान्छे फर्किँदैन भन्ने उनलाई थाहा थियो । मरेको मान्छेलाई कसैले देख्यो भने उसलाई 'प्रेत' भनेर तर्सिन्थे ।

त्यसकारण उनले बठ्याइँपूर्वक पहिलो वर मागे, “मेरा पिता उद्दालकको रिस शान्त होस् । मृत्युको मुखबाट फर्किए पनि मलाई उहाँले सहर्ष स्वीकार गर्नुहोस् ।” यो पहिलो वरमा उनले तीनओटा वर जोडेका थिए, “मृत्युलोकबाट घर फर्किन पाउने, पिताको रिस शान्त हुने र आफूलाई पिताले पनि स्वीकार गर्नुपर्ने ।” उनको चलाखी देखेर यमराज प्रसन्न भए । उनले ‘तथास्तु’ भनी पहिलो वर दिए ।

दोस्रो वरमा नचिकेताले अग्निविद्या मागे । स्वर्ग जान अग्निविद्याको प्रयोग हुन्छ भन्ने उनले सुनेका थिए । यमराज उनको परिपक्वता देखेर छक्क परे । खुसी भएर उनले अग्निविद्याको उपदेश पनि गरे । त्यसपछि उनले भने, “हे नचिकेता ! यो अग्निविद्या तपाईंको नामले प्रसिद्ध हुनेछ । अब तेस्रो वर माग्नुहोस् ।”

यमराजले वर माग्नुहोस् भनेपछि नचेकताले भने, “जब कोही मर्छ, तब कोही भन्छन्, ‘ऊ अझै पनि छ’ अनि कसैले भन्छन्, ‘मरेपछि सकियो, अब ऊ छैन’ । कुनै जीव मृत्युपछि बाँकी रहन्छ कि रहँदैन ? तेस्रो वरका रूपमा मलाई यो उपदेश गर्नुहोस् ।” नचिकेता बालकै थिए । उनको मुखबाट यस्तो गहिरो प्रश्न सुनेर यमराज छक्क परे । उनले भने, “हे नचिकेता ! तपाईं सानै हुनुहुन्छ । यसको उत्तर तपाईं बुझ्न सक्नुहुन्न । पहिले देवताहरूले पनि यो बुझ्न खोजे, तर सकेनन् । बरु सुख माग्नुहोस्, प्रशस्त जमिन माग्नुहोस्, अनेक सम्पत्ति माग्नुहोस् तर मृत्युको रहस्य बुझ्न नखोज्नुहोस् ।” तर नचिकेताले भने, “देवताहरूले पनि यही कुरा बुझ्न खोजे । यो सजिलै बुझ्न पनि सकिँदैन । तर यो ज्ञानको तपाईंजस्तो कुशल उपदेश गर्ने मान्छे पनि अरू छैन । त्यसैले मलाई अरू केही चाहिएको छैन । मलाई तेस्रो वरका रूपमा यही चाहिन्छ ।”

नचिकेताको यस्तो दृढ निश्चय सुनेर यमराज फेरि खुसी भए । बालक भए पनि नचिकेता धनको लोभ गर्दैनथे । उनमा सुख भोग्ने इच्छा पनि थिएन । उनमा ज्ञान प्राप्त गर्ने दृढ इच्छा थियो । उनको दृढता देखेर यमराजले उनलाई मृत्युको रहस्य उपदेश गरे । नचिकेताले पनि मृत्युको गोप्य रहस्य यमराजबाट सुने । उनी त्यहाँबाट ज्ञानी र प्रसन्न भएर मृत्युलाई पनि खुसी पारी घर फर्किए ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| एकवारम् | एकस्मिन् काले | एकपटक | Once |
| स्वकीयम् | स्वीयम् | आफ्नो | Own |
| आरब्धवान् | प्रारब्धवान् | सुरु गरे | (He) Started |
| प्राप्नोति | अवाप्नोति | पाउँछ | Gets |
| समक्षम् | अक्ष्णोः समीपम् | अगाडि | Direct to eyes |
| तारस्वरेण | उच्चैः स्वरेण | ठुलो स्वरले | Out loud |
| क्रोधवशात् | कोपवशात् | रिसले | With Anger |
| क्षणानन्तरम् | क्षणस्य पश्चात् | एकैछिनपछि | After a moment |
| पश्चात्तापः | अनुतापः | पछुतो | remorse |
| प्रतीक्षमाणः | प्रतीक्षां कुर्वाणः | पर्खिरहेको | waiting |
| बुभुक्षितः | क्षुधितः | भोकाएको | Hungry |
| अनश्नन् | अभुञ्जानः | नखाइकन | Without eating |
| प्रत्यावर्तते | प्रत्यागच्छति | फर्किएर आउँछ | Returns |
| कोपशमनम् | क्रोधशमनम् | रिस शान्त पार्ने काम | To pacify anger |
| वृणीष्व | स्वीकुरुष्व | वर माग | (you) Beg a boon |
| उपदिश | उपदेशं कुरु | उपदेश गर | (you) Precept |
| स्वर्गीयम् | स्वर्गे भवम् | स्वर्गमा हुने | Heavenly |
| सुविज्ञेयम् | सरलतया ज्ञातुं शक्यम् | सजिलै जान्न सकिने | Easy to know |

**श्रवणम्, भाषणञ्च**

१. **पाठस्य सर्वान् अनुच्छेदान् एकैकशः उच्चारयत । एकस्य उच्चारणम् अन्ये शृणुत, उच्चारणगताः त्रुटीश्च निराकुरुत ।**

२. **पाठस्य द्वितीयम् अनुच्छेदं श्रुत्वा तस्य आशयं मातृभाषायां वदत ।**

३. **अधस्तनानि पदानि सम्यग् उच्चारयत**

उद्दालकनामकः, स्वकीयम्, बुद्धिमान्, कस्मैचन, क्रोधवशात्, क्षणानन्तरम्, पश्चात्तापम्, प्रतीक्षमाणः, ब्रह्मचारिन् !, प्रत्यावर्तनम्, अग्निविद्यायाः, वृणीहि, सुविज्ञेयम्, प्रत्यागच्छत्

४. **कक्षायां स्वभाषया पाठगतां कथां कथयत ।**

५. **'यमः नचिकेतसः समक्षम्.....' इति अनुच्छेदं श्रुत्वा एकवाक्येन उत्तरयत**

(क) नचिकेतसः समक्षं कः अगच्छत् ?

(ख) यमः नचिकेतसे कति वरान् दातुम् ऐच्छत् ?

(ग) नचिकेताः किं जानाति स्म ?

(घ) प्रथमेन वरेण याचितं वरत्रयं किम् ?

(ङ) यमः किं दृष्ट्वा प्रसन्नः अभवत् ?

६. **सत्यवाक्ये 'आम्' असत्यवाक्ये च 'नहि नहि' इति वदत**

(क) नचिकेताः बालः अस्ति, अतः चतुरः नास्ति ।

(ख) नचिकेताः जीवितः एव यमलोकं गतवान् ।

(ग) यमराजः नचिकेतसः समक्षं गत्वा क्रुद्धः अभवत् ।

(घ) नचिकेताः यमं मृत्योः रहस्यं पृष्टवान् ।

(ङ) नचिकेताः मृत्योः रहस्यं ज्ञात्वा यमलोके एव अतिष्ठत् ।

७. **मित्रस्य मुखात् 'इतः परं नचिकेताः.... ' इति अनुच्छेदं श्रुत्वा एकवाक्येन उत्तरं वदत**

(क) यदा कश्चन म्रियते, तदा जनाः किं किं वदन्ति ?

(ख) यमः किमर्थं चकितः अभवत् ?

(ग) पुरा मृत्योः रहस्यं ज्ञातुं के ऐच्छन् ?

(घ) 'नचिकेताः तृतीयेन वरेण स्वर्गसुखम् इच्छति', एतत् सत्यम् असत्यं वा ?

**८. नचिकेतसः कथां श्रुत्वा कः सन्देशो लभ्यते ? मातृभाषायां श्रावयत ।**

**९. श्रवणपाठं श्रुत्वा निर्दिष्टकार्याणि कुरुत**

**(अ) अधस्तनानां प्रश्नानाम् उत्तराणि वदत**

(क) व्यासः कति पुराणानि रचितवान् ?

(ख) नेपालस्य माहात्म्यं विशेषतः कस्मिन् पुराणे अस्ति ?

(ग) नेपालः केन नाम्ना पुराणेषु प्रसिद्धः अस्ति ?

(घ) ऋषयः कुत्र तपः कुर्वन्ति स्म ?

(ङ) कः नेपाले तपः अकरोत् ?

**(आ) परस्परं मेलयत**

| | |
|---|---|
| सत्ये | मुक्तिसोपानम् |
| त्रेतायाम् | नेपालिका |
| द्वापरे | सत्यवती |
| कलौ | तपोवनम् |

## पठनम्

**१. पाठस्य कथायाः सस्वरपठनं कुरुत ।**

**२. पाठस्य तृतीयम् अनुच्छेदं लेख्यचिह्नानि विचार्य पठत, शिक्षकस्य साहाय्येन त्रुटीश्च निराकुरुत ।**

**३. 'क्षणानन्तरं ऋषिः...' इति अनुच्छेदस्य निरवच्छिन्नपठनं कुरुत ।**

**४. 'अन्त्ये उद्दालकः...' इति अनुच्छेदं मनसा पठित्वा समुचितम् उत्तरं चिनुत**

(क) उद्दालकः कीदृशीः गाः दातुम् आरब्धवान् ?

(अ) बालाः (आ) वृद्धाः (इ) सकृत्प्रसूताः

(ख) यः गाम् आददाति, सः किं प्राप्नोति ?

(अ) दुग्धम् (आ) कल्याणम् (इ) दुःखम्

(ग) तृतीयवारं नचिकेताः कथम् अवदत् ?

(अ) तारस्वरेण (आ) मन्दस्वरेण (इ) मधुरस्वरेण

(घ) ऋषिः स्वपुत्रं कस्मै दत्तवान् ?

(अ) ब्राह्मणाय (आ) यज्ञाचार्याय (इ) मृत्यवे

**५. पाठं मनसा पठित्वा उत्तराणि लिखत**

(क) नचिकेतसः पिता कः आसीत् ?

(ख) पिता नचिकेतसं कस्मै दत्तवान् ?

(ग) नचिकेताः सशरीरं कुत्र अगच्छत् ?

(घ) यमप्रासादस्य द्वारे नचिकेताः अनश्नन् कति दिनानि यापितवान् ?

(ङ) द्वितीयेन वरेण नचिकेताः किम् अयाचत ?

(च) कतमं प्रश्नं श्रुत्वा यमः चकितः अभवत् ?

**६. अधस्तनं पद्यं पठित्वा उत्तराणि वदत**

विद्या विवादाय धनं मदाय
शक्तिः परेषां परिपीडनाय ।
खलस्य साधोर्विपरीतमेतद्
ज्ञानाय दानाय च रक्षणाय ॥

खलस्य विद्या विवादाय भवति, साधोः विद्या ज्ञानाय भवति । खलस्य धनं मदाय

भवति, साधोः दानाय भवति । खलस्य शक्तिः परेषां पीडनाय भवति, साधोः परेषां रक्षणाय भवति ।

मूर्खले विद्याको प्रयोग विवादका लागि गर्छ, धनको प्रयोग घमन्ड देखाउनका लागि गर्छ र शक्तिको उपयोग अरूलाई दुःख दिनका लागि गर्छ । सज्जन व्यक्तिले चाहिँ यसको विपरीत यिनीहरूको प्रयोग गर्छ । उसले विद्याको प्रयोग ज्ञान दिनका लागि, धनको प्रयोग दान गर्नका लागि र शक्तिको प्रयोग रक्षा गर्नका लागि गर्छ ।

(क) खलः विद्यया किं करोति ?

(ख) साधोः विद्या कस्मै प्रयोजनाय भवति ?

(ग) कस्य धनं मदाय, कस्य च दानाय ?

(घ) खलस्य शक्तिः किमर्थम् उपयुज्यते ?

(ङ) खलस्य साधोश्च विद्यायां, धने, शक्तौ च का विशेषता ?

**७. अधस्तनस्य अनुच्छेदस्य द्रुतपठनं कृत्वा आशयं कक्षायां श्रावयत**

वयं बालकाः स्मः । वयं विद्यालयं गच्छामः । तत्र अनेकाः कथाः पठामः । कथानां पठनेन अस्माकं बुद्धिः तीक्ष्णा भवति, चरित्रं च निर्मलं भवति । वयं पुराणानाम्, महाभारतस्य रामायणस्य वा कथाः शृणुमः । कथानां श्रवणे अस्माकं रुचिः प्रसरति । गुरवः स्नेहेन कथाः कथयन्ति, पाठयन्ति च । गुरवः रामायणस्य कथां वारं वारं श्रावयन्ति । रामायणे विशेषेण रामस्य कथा वर्तते । रामस्य लक्ष्मणस्य च भ्रातृत्वम् अनुकरणीयम् आसीत् । सीता रामस्य सहधर्मिणी आसीत् । तत्र हनुमान् अपि वर्तते । अहं हनुमतः कथां श्रुत्वा प्रसन्नः भवामि । हनुमतः माता अञ्जनिः आसीत् । पिता च पवनदेवः आसीत् । हनुमान् अतीव बलशाली आसीत् । सः पर्वतम् अपि वोढुं शक्नोति स्म । सः रामस्य कार्यं साधयति स्म । रावणः सीतां जहार । हनुमान् सीतायाः अन्वेषणाय समुद्रम् लङ्घितवान् । हनुमते यत् कार्यं प्रदीयते स्म, तत् कार्यं हनुमान् अवश्यं पूर्णं

करोति स्म । हनुमतः चरित्रेण वयं कार्यसम्पादनस्य शिक्षां प्राप्नुमः ।

हामी बालबालिका हौँ । हामी विद्यालय जान्छौँ । त्यहाँ अनेकौँ कथाहरू पढ्छौँ । कथा पढ्नाले हाम्रो बुद्धि चनाखो हुन्छ, मन पनि सफा हुन्छ । हामी पुराण, महाभारत र रामायणका कथा सुन्छौँ । कथा सुन्न हामीलाई मजा लाग्छ । गुरुहरू माया गरेर कथा भन्नुहुन्छ । गुरुहरू रामायणका कथा सुनाउनुहुन्छ । रामायणमा विशेष गरी रामको कथा छ । राम र लक्ष्मणबिच घनिष्ट प्रेम थियो । ती दाजुभाइको प्रेम उदाहरणीय थियो । सीता रामकी पत्नी थिइन् । त्यहाँ हनुमान् पनि छन् । म हनुमान्को कथा सुनेर रमाउँछु । हनुमान्की आमा अञ्जनि थिइन् । पिता वायु थिए । हनुमान् धेरै बलिया थिए । उनी पहाड पनि उचाल्न सक्थे । उनी रामको लागि काम गर्थे । रावणले सीतालाई हरण गरेको थियो । हनुमान्ले सीतालाई खोज्नका लागि समुद्र पनि नाघेका थिए । हनुमान्लाई जुन काम दिइन्थ्यो त्यो काम पूर्ण गर्थे । हनुमान्को चरित्रबाट हामीले आफ्नो काम पूरा गर्नुपर्छ भन्ने शिक्षा पाउँछौँ ।

## लेखनम्

१. **पाठाधारेण अधस्तनानि पदानि शुद्धानि कृत्वा पुस्तिकायां लिखत**

नचीकेताः, खादितूम्, उद्धालकः, शमक्षम्, बूभूक्षितः, वृणिष्व, षक्नोशि, मृत्युरहश्यम्

२. **अधस्तनानि पदानि प्रयुज्य सरलानि वाक्यानि रचयत**

स्वकीयम्, कल्याणम्, देहि, उक्तवान्, पश्चात्, अनश्नन्, आसीत्, श्रुत्वा, प्रसाद्य

३. **गुरोः साहाय्येन अधस्तनस्य श्लोकस्य सरलार्थं लिखत**

आकाशे चन्द्रमा भाति पद्मं भाति सरोवरे ।<br>
सुपुत्रस्तु कुले भाति सज्जनाः धरणीतले ॥



उत्पीठिकाः, कक्षाकोष्ठः, पीठिकायाम्, पट्टिकायाम्, शिक्षकः, पुस्तकानि, घटिका

**४. चित्रं दृष्ट्वा कोष्ठस्थशब्दैः अनुच्छेदस्य रिक्तस्थानानि पूरयत**

मम ....... सुन्दरः वर्तते । अत्र अनेकाः ........ सन्ति । वयम् ......... निवसामः । ........... अस्मान् संस्कृतं पाठयति । सा ........ सुन्दराणि अक्षराणि लिखति । भित्तौ ......... स्थापिता अस्ति । मञ्जूषायाम् बहूनि ........... सन्ति ।

**५. पाठस्य प्रथमम् अनुच्छेदं शिक्षकस्य मुखात् श्रुत्वा लिखत ।**

**६. अधस्तनीं सारिणीं विलोक्य कथायां वर्तमानानां पात्राणाम् एव नामानि विचित्य लिखत**




७. **एकवाक्येन उत्तरयत**

(क) यज्ञस्य अन्ते उद्दालकः कीदृशीः गाः दातुम् आरब्धवान् ?

(ख) नचिकेताः पितरम् किम् अपृच्छत् ?

(ग) यमप्रासादं प्राप्य नचिकेताः कुत्र अतिष्ठत् ?

(घ) यमः नचिकेतसे कति वरान् दातुम् ऐच्छत् ?

(ङ) नचिकेतसः निश्चयं श्रुत्वा यमः किम् अकरोत् ?

७. **सरलशब्दैः नचिकेतसः विषये एकम् अनुच्छेदं लिखत ।**

८. **पाठस्य सन्देशं सरलभाषया लिखत ।**

**९. कथायाः क्रमविन्यासं मेलयित्वा लिखत**

( ) नचिकेतसः मृत्यवे दानम्

( ) यमद्वारा तृतीयवरप्रदानाय अस्वीकरणम्

( ) यमस्य आगमनम्, वरत्रयदानाय इच्छा

( ) नचिकेतसः पितुः यज्ञस्य आयोजनम्

( ) नचिकेतसः प्रथमस्य द्वितीयस्य च वरस्य याचनम्

( ) वृद्धानां गवां दानम्

( ) यमस्य मुखात् मृत्युरहस्यज्ञानम्, नचिकेतसः गृहे आगमनं च ।

( ) नचिकेतसः यमलोकगमनम्, अनश्नन् द्वारे प्रतीक्षा

( ) नचिकेतसः दृढनिश्चयः, तेन यमस्य प्रसन्नता

**१०. नचिकेताः मृत्योः रहस्यं ज्ञातुं कथं समर्थः अभवत् ? कथाया आधारेण लिखत ।**

**११. कः कस्मै उक्तवान् ? लिखत**

(क) मां कस्मै दास्यति ? अहम् अपि भवतः पुत्रः अस्मि, अतः कस्मैचन ददातु ।

(ख) अहं त्वां मृत्यवे ददामि ।

(ग) अस्माकं पूर्वतनाः पितरः अपि मृत्योः मुखे प्रविष्टाः । वयम् अपि पश्चात् मरिष्यामः ।

(घ) अस्माकं द्वारे कश्चन अतिथिः अस्ति । सः किमपि न खादति ।

(ङ) अहं भवते त्रीन् वरान् ददामि ।

(च) कश्चन जीवः मृत्योः पश्चाद् भवति वा न ?

(छ) एतस्य ज्ञानस्य भवादृशः अन्यः वक्ता न अस्ति ।

## १२. अधस्तनीं कथां पठित्वा निर्दिष्टानि भाषिककार्याणि कुरुत

कस्मिंश्चिद् ग्रामे दश युवानः वसन्ति स्म । ते एकदा धनार्जनाय ग्रामं परित्यज्य विदेशं गच्छन्तः आसन् । मार्गे एका नदी आसीत् । नद्यां सेतुः नासीत् । क्षणं विचार्य ते परस्परं हस्तान् संयोज्य नदीं तर्तुम् उद्यताः अभवन् । एकस्य हस्तम् अपरः गृह्णाति, तस्य च अपरं गृह्णाति । एतावता शृङ्खलां बद्ध्वा नदीं तर्तुं ते नद्यां प्रविष्टाः । नद्याः वेगः बलवान् आसीत् । अतः मध्ये एव ते वियुक्ताः अभवन् ।

कथञ्चित् ते सर्वे नद्याः पारम् अगच्छन् । किन्तु 'सर्वे नद्याः पारम् आगताः न वा ?' इति शङ्का अभवत् । तेषां नेता सर्वेषां गणनां कर्तुम् आरभत । 'एकम्, द्वे, त्रीणि, चत्वारि... ' इति । तत्र नवसङ्ख्यापर्यन्तं गणयित्वा सः अवदत्, "अस्मासु कश्चन एकः नास्ति" इति । ततः अपरः गणयितुम् आरब्धवान् । सः अपि नवपर्यन्तं गणयित्वा उक्तवान्, "आम्, अस्मासु कश्चन एको नास्ति" । तद् विज्ञाय सर्वे एकैकवारम् अगणयन् किन्तु दशमो जनः नैव सम्प्राप्तः । क्षणानन्तरं दशमं जनम् अन्वेष्टुं ते नदीतीरं गताः । किन्तु तत्र सः नैव प्राप्तः । कः नद्यां निमग्न इति ते ज्ञातुम् अपि नैव समर्थाः अभवन् । अतः मुखं मलिनं विधाय तत्र एव अतिष्ठन् ।

कश्चन साधुः तत्र आगच्छत् । स उक्तवान्, "भो पथिकाः ! किमर्थं भवतां मुखानि मलिनानि वर्तन्ते ?" । तेषां नेता सर्वं वृत्तान्तम् अवदत् । साधुः पुनः तं गणयितुं निर्दिष्टवान् । सः अपि पुनः 'एकम्, द्वे...' इति अगणयत् । नव एव अत्र स्मः, दशमः नास्ति इति अवदत् । ततः साधुः अवदत्, "अरे पथिक ! मूर्खः असि किम् ? दशमः त्वम् असि" । एतत् श्रुत्वा सर्वे चकिताः अभवन् । स्वस्य मूर्खत्वं दृष्ट्वा लज्जिताः सन्तः साधुम् अनमन् । प्रसन्नाः सन्तः ततः अग्रे अगच्छन् ।

कुनै गाउँमा दश जना साथीहरू बस्दथे । उनीहरूले एकपटक धन कमाउने विचार गरी गाउँ छोडेर विदेश जान लागे । बाटोमा एउटा नदी थियो । नदीमा पुल थिएन । एकैछिन विचार गरेर उनीहरूले एक-अर्काको हात समातेर नदी तर्ने विचार गरे । एउटाको हात अर्काले समात्ने, उसको अर्काले समात्ने गरी साङ्लो बनाएर नदी तर्न लागे । नदी वेगसित बगिरहेको थियो । वेगका कारण उनीहरूको हात बिचैमा छुटि्टयो ।

जसोतसो सबै नदीपारि पुगे । पारि पुगेपछि उनीहरू सबैलाई, 'हामी सबै नदी तऱ्यौँ त ?' भन्ने शङ्का लाग्यो । उनीहरूको टोलीनेताले गन्न लाग्यो, 'एक, दुई, तीन...' । नौसम्म गनिसकेपछि उसले भन्यो, "ला ! हामीमध्ये एकजना छैन ।" त्यसपछि अर्कोले पनि गन्न लाग्यो । उसले पनि नौसम्म गनेर भन्यो, "अँ त, एकजना छैन ।" त्यो सुनेपछि सबैले एक-एकपटक गने तर दसौँ मान्छे भेटिएन । त्यसपछि उनीहरू दसौँ मान्छे खोज्नका लागि नदीकिनारमा गए । नदीकिनारमा पनि दसौँ मान्छे भेटिएन । को हरायो भन्ने पनि पत्ता लागेन । त्यसपछि अँध्यारो मुख लगाएर नदीको किनारमा थचक्क बसे ।

त्यही समयमा कुनै साधु त्यहाँ आइपुगे । उनले भने, "हे बटुवा हो ! तिमीहरूको मुख किन यति अँध्यारो छ ?" उनीहरूमध्ये नेताले सबै वृत्तान्त साधुलाई सुनायो । साधुले फेरि पनि गन्न लगाए । उसले फेरि पनि 'एक, दुई..' भन्दै नौसम्म गनेर भन्यो, "हामी जम्मा नौजना मात्र छौँ, को नदीमा डुब्यो थाहै भएन ।" यो सुनेर साधुले मुस्कुराउँदै भने, "हे बटुवा ! तिमी मूर्ख छौ कि के हो ? दसौँ तिमी के त !" साधुको यो कुरा सुनेपछि सबै आश्चर्यचकित भए । सबैले आफूलाई गन्ती गर्न बिर्सेको देखेर उनीहरू लज्जित भएर साधुलाई नमस्कार गरेपछि खुसी हुँदै अगाडि बढे ।

**एकवाक्येन उत्तरयत**

**(क) दश युवानः किमर्थं विदेशं गच्छन्तः आसन् ?**

(आ) नद्याः वेगः कीदृशः आसीत् ?

(इ) कः तेषां समस्यायाः समाधानम् अकरोत् ?

(ई) किमर्थं दश युवानः लज्जिताः अभवन् ?

**(ख) निर्दिष्टानि भाषिककार्याणि कुरुत**

(अ) कथातः पञ्च क्रियापदानि लिखत ।

(आ) कथायां प्रयुक्तानि पञ्च एकवचनान्तानि पदानि पञ्च बहुवचनान्तानि पदानि लिखत ।

(इ) कथातः त्रीणि विशेषणपदानि तद्विशेष्यपदैः परस्परं मेलनेन दर्शयत ।

## व्याकरणानुशीलनम्

### १. नचिकेतस्शब्दस्य सर्वाणि रूपाणि पठत

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | नचिकेताः | नचिकेतसौ | नचिकेतसः |
| द्वितीया | नचिकेतसम् | नचिकेतसौ | नचिकेतसः |
| तृतीया | नचिकेतसा | नचिकेतोभ्याम् | नचिकेतोभिः |
| चतुर्थी | नचिकेतसे | नचिकेतोभ्याम् | नचिकेतोभ्यः |
| पञ्चमी | नचिकेतसः | नचिकेतोभ्याम् | नचिकेतोभ्यः |
| षष्ठी | नचिकेतसः | नचिकेतसोः | नचिकेतसाम् |
| सप्तमी | नचिकेतसि | नचिकेतसोः | नचिकेतःसु |
| सम्बोधनम् | हे नचिकेतः ! | हे नचिकेतसौ ! | हे नचिकेतसः ! |

### २. तत्शब्दस्य त्रिषु एव लिङ्गेषु रूपाणि पठत

| | पुँल्लिङ्गस्य रूपाणि | | | स्त्रीलिङ्गस्य रूपाणि | | | नपुंसकलिङ्गस्य रूपाणि | | |
|---|---|---|---|---|---|---|---|---|---|
| विभक्तिः | ए.व. | द्वि.व. | बहु.व. | ए.व. | द्वि.व. | बहु.व. | ए.व. | द्वि.व. | बहु.व. |
| प्रथमा | सः | तौ | ते | सा | ते | ताः | तत् | ते | तानि |
| द्वितीया | तम् | तौ | तान् | ताम् | ते | ताः | तत् | ते | तानि |
| तृतीया | तेन | ताभ्याम् | तैः | तया | ताभ्याम् | ताभिः | तेन | ताभ्याम् | तैः |
| चतुर्थी | तस्मै | ताभ्याम् | तेभ्यः | तस्यै | ताभ्याम् | ताभ्यः | तस्मै | ताभ्याम् | तेभ्यः |
| पञ्चमी | तस्मात् | ताभ्याम् | तेभ्यः | तस्याः | ताभ्याम् | ताभ्यः | तस्मात् | ताभ्याम् | तेभ्यः |
| षष्ठी | तस्य | तयोः | तेषाम् | तस्याः | तयोः | तासाम् | तस्य | तयोः | तेषाम् |
| सप्तमी | तस्मिन् | तयोः | तेषु | तस्याम् | तयोः | तासु | तस्मिन् | तयोः | तेषु |
| सम्बोधनम् | तत्शब्दस्य सम्बोधनं न भवति । | | | | | | | | |

३. **उदाहरणानि दृष्ट्वा तत्शब्दस्य रूपाणाम् अभ्यासं कुरुत**

उदाहरणम् - नचिकेताः बालः आसीत् । किन्तु सः बुद्धिमान् आसीत् ।

(क) गावः वृद्धाः आसन् । ........ घासं खादितुं समर्थाः न आसन् ।

(ख) उद्दालकः ऋषिः आसीत् । नचिकेताः ........ पुत्रः आसीत् ।

(ग) मृत्युः भयङ्करः भवति । उद्दालकः ........ नचिकेतसं दत्तवान् ।

(घ) ऋषिः दानं कुर्वाणः आसीत् । नचिकेता ........ सर्वं पश्यन् आसीत् ।

(ङ) यमनचिकेतसौ परस्परं अमिलताम् । ........ वार्तालापः अभवत् ।

(च) गृहे यमस्य पत्नी आसीत् । ........ चिन्तामग्ना आसीत् ।

(छ) स्वर्गे नानाविधानि भोगसाधनानि सन्ति । नचिकेताः ........ अत्यजत् ।

४. **अधस्तनाद् अनुच्छेदात् तत्-शब्दस्य रूपाणि अन्विष्य पुस्तिकायां लिखत**

अस्माकं देशः नेपालः सुन्दरः अस्ति । अस्मिन् देशे अनेके हिमालयाः सन्ति । ते सुन्दराः सन्ति । तेषु हिमस्य प्रचुरता वर्तते । हिमालयाद् नद्यः वहन्ति । ताः पवित्राः सन्ति । तासु शीतं जलं वहति । हिमालयेषु गौरीशङ्करहिमालयः प्रसिद्धः वर्तते । गौरीशङ्करौ दम्पती स्तः । तौ अत्रैव क्रीडतः । अतः गौरीशङ्कर हिमालयः ताभ्यां शोभितः वतते । नेपालः हिमालयानां देशः वर्तते । अयं हिमवत्खण्डः इत्यपि उच्यते । तस्यां भूमौ अनेकानि तीर्थानि सन्ति । तानि पवित्राणि तीर्थानि अस्माकं शोभां वर्धयन्ति । तेषु तीर्थेषु धार्मिकानां जनानां संबाधः भवति ।

५. **कोष्ठकात् तत्-शब्दस्य समुचितं पदं विन्यस्य वाक्यानि पूरयत**

(क) उद्याने पुष्पाणि सन्ति । (ते/तानि) सुन्दराणि सन्ति ।

(ख) पुष्पेषु पतङ्गिकाः वसन्ति । (सा/ताः) इतस्ततः उड्डीयन्ते ।

(ग) मम भ्राता पतङ्गिकां दृष्ट्वा रमते । (सः/सा) चतुरः वर्तते ।

(घ) चतुराः मानवाः कार्येषु कुशलाः भवन्ति । (ते/तानि) सरलतया कार्याणि कर्तुं शक्नुवन्ति ।

(ङ) यानि कार्याणि समीचीनानि सन्ति, (ताः/तानि) कर्तव्यानि ।

**६. अनच्छेदं पठित्वा पञ्चम्यन्तानि पदानि चिनुत**

रामः गृहाद् विद्यालयं गच्छन् अस्ति । मार्गे वृक्षाः सन्ति । वृक्षेभ्यः पत्राणि पतन्ति । एकस्मिने वृक्षे चटकस्य नीडम् अस्ति । नीडात् चटकाः आहारम् अन्वेष्टुं गताः सन्ति । चटकाः ग्रामं गच्छन्ति । ग्रामात् अन्नानि आनयन्ति । विद्यालयस्य मार्गे एकस्य कृषकस्य गृहम् अस्ति । समीपे गोशाला अस्ति । गोशालायाः सः दुग्धम् आनयति । दुग्धपात्रात् दुग्धं पतत् अस्ति । तत् सर्वं दृष्ट्वा रामस्य मुखात् शब्दः निःसरति- “महोदय ! दुग्धं पतत् अस्ति ।”

**७. उदाहरणं कोष्ठकस्य सङ्केतानुसारं वाक्यानि पूरयत**

उदाहरणम् - रामः (नदी, जल) आनयति ।

रामः नद्याः जलम् आनयति ।

(क) पिता (आपण/मिष्टान्न) आनयति ।

(ख) माता (मातुलगृह/गृह) आगच्छति ।

(ग) उद्याने (वृक्ष/फल) पतन्ति ।

(घ) (हिमालय/नदी) वहन्ति ।

(ङ) अहं (पाठशाला/शिक्षा) गृह्णामि ।

## रचनात्मकोऽभ्यासः

१. **अधस्तनानि चित्राणि विलोक्य तदनुसारम् एकां कथां रचयत ।**



## श्रवणपाठः

व्यासः अष्टादश पुराणानि रचितवान् । तेषु स्कन्दपुराणे विशेषतः नेपालस्य माहात्म्यं लभ्यते । नेपाले अनेकानि तीर्थानि सन्ति । अनेके हिमालयाः सन्ति । अनेकाः नद्यः वहन्ति । नदीनां सङ्गमस्थलानि पवित्राणि तीर्थानि मन्यन्ते । नेपालः हिमवत्खण्डनाम्ना अपि पुराणेषु प्रसिद्धो वर्तते । हिमालयानां नामानि अपि पुराणेषु उल्लिखितानि सन्ति । अत्रत्यानां नदीनां, तीर्थानां च नामानि पुराणेषु लभ्यन्ते । नेपालस्य पर्वतगह्वरेषु ऋषयः तपः कुर्वन्ति स्म ।

अतः नेपालदेशः 'तपोवनम्' इति नाम्ना प्रसिद्धः आसीत् । 'ने' इति नामकः मुनिः अत्र तपः अकरोत् । अत एव तस्य नाम्ना अस्य देशस्य 'नेपाल' इति नामधेयं प्रसिद्धम् इति प्रमाणं लभ्यते । नेपालस्य नामधेयविषये एष श्लोकः प्रसिद्धो वर्तते-

**सत्ये सत्यवती प्रोक्ता त्रेतायां तु तपोवनम् ।**
**द्वापरे मुक्तिसोपानं कलौ नेपालिका पुरी ॥ इति ।**

# षष्ठः पाठः

**पाठप्रवेशः**

## वार्तालापः



(शिवसङ्कल्पः विश्वविद्यालये अध्यापयति । तस्य द्वे पुत्र्यौ स्तः । एका आग्नेयी अपरा च अनसूया । अनसूया पञ्चम्यां कक्षायां पठति । अद्य विद्यालये अवकाशः अस्ति । प्रातःकालस्य भोजनं विधाय शिवसङ्कल्पः स्वकीये पुस्तकालये पौराणिकनारीणां विषये पठितुम् आरभते । तदानीम् एव तस्याः कनिष्ठा पुत्री अनसूया तत्र आगच्छति । ततः तयोः वार्ता प्रचलति ।)

**अनसूया :** पितः ! एकं प्रश्नम् अहं पृच्छानि ?

**शिवसङ्कल्पः** कीदृशः प्रश्नः ? पृच्छ पुत्रि !

**अनसूया** अस्माकं कक्षायाम् एका नवीना गुरुमाता पाठयति । सा मां मम नाम्नः अर्थं पृच्छति । का अस्ति अनसूया ?

**शिवसङ्कल्पः** तर्हि तु अनसूयायाः विषये मम पुत्री नैव जानाति ?

**अनसूया :** नहि । अत एव पृष्टवती ।

**शिवसङ्कल्पः** तर्हि अहम् अनसूयायाः जीवनविषये कथयामि । शृणु ।

(शिवसङ्कल्पः कथयितुम् आरभते । अनसूया च शृणोति ।)

(शिवसङ्कल्प विश्वविद्यालयमा पढाउनुहुन्छ । उहाँका दुईवटी छोरी छन् । एउटीको नाम आग्नेयी हो भने अर्की अनसूया हुन् । अनसूया पाँच कक्षामा पढ्छिन् । आज बिदा छ । बिहानको खानपिनपछि शिवसङ्कल्प आफ्नो पुस्तकालयमा पौराणिक नारीहरूका बारेमा पढ्न सुरु गर्नुहुन्छ । त्यसै बेला उहाँकी कान्छी छोरी त्यहाँ आउँछिन् । त्यसपछि कुराकानी सुरु हुन्छ ।)

**अनसूया :** बुबा ! म हजुरलाई एउटा कुरा सोधूँ ?

**शिवसङ्कल्पः** कस्तो कुरा ? सोध न छोरी !

**अनसूया :** हाम्रो कक्षामा नयाँ गुरुआमा पढाउन थाल्नुभएको छ । उहाँ मलाई मेरो नामको अर्थ सोध्नुहुन्छ । खासमा अनसूया को हुन् ?

**शिवसङ्कल्पः** ए हो र ? त्यसो भए मेरी छोरीलाई अनसूयाका बारेमा थाहा छैन ?

**अनसूया :** छैन नि । त्यही भएर त सोधेकी ।

**शिवसङ्कल्पः** त्यसो भए अनसूयाको जीवनीका बारेमा सुन ।

(शिवसङ्कल्प सुनाउन थाल्नुहुन्छ । अनसूया ध्यान दिएर सुन्छिन् ।)

**मूलपाठः**

# सदाचारवती अनसूया

पौरस्त्यवाङ्मयेषु अनेकानां पवित्राचरणानां नारीणां चर्चा लभ्यते । ताः नार्यः विचारेण व्यवहारेण च अनुकरणीयाः सन्ति । ताः जीवमात्रस्य कल्याणाय योगदानं विहितवत्यः । तासु अनसूयापि एका अस्ति । तस्याः पिता महर्षिः कर्दमः आसीत् । तस्याः जननी देवहूतिः आसीत् । तस्याः अग्रजस्य नाम कपिल आसीत् । सा बाल्यादेव अध्ययनाय अवसरं प्राप्तवती । तस्याः विवाहः महर्षिणा अत्रिणा सह समभूत् । सरलेन स्वभावेन, विशिष्टेन विचारेण च सा सर्वेषां प्रिया आसीत् ।

अनसूया सदैव सदाचारनिष्ठा आसीत् । सा स्वविचारस्य शुद्धतायै सावधाना आसीत् । गुणग्राहिणी अनसूया स्वल्पगुणवन्तम् अपि प्रशंसति स्म । तस्याः मनसि कलुषितभावनाः न आविर्भवन्ति स्म । तस्यां लोभः, मामः, क्रोधः, भयं च न आसीत् । अतः सर्वेऽपि तस्या व्यवहारं वैदुष्यं च प्रशंसन्ति स्म ।

त्रेतायां अत्रिः भगवता रामचन्द्रेण सह वार्तालापप्रसङ्गे उक्तवान्, “अनसूया देवताकार्यसिद्ध्यर्थं कर्म करोति । इयं गुणवती, ज्ञानवती तपस्विनी चास्ति । इयं क्रोधमुक्ता अस्ति । परोपकाराय कार्यं करोति । अतः इयं वन्दनीया अस्ति ।” इति ।

वाङ्मयेषु इयं कथा प्रसिद्धा अस्ति - दुर्भाग्यवशाद् ऋषिः माण्डव्यः शूल्यां संयोजितः । दैववशात् कौशिकब्राह्मणः पादेन शूलिनं पस्पर्श । शूली च कम्पितः । कम्पनात् माण्डव्यः असह्यं कष्टम् अन्वभवत् । क्रोधवशः माण्डव्यः श्रापम् अददात्- सति सूर्योदये अनावश्यक कष्टदातुः मरणं स्यात् इति । कौशिकः कुष्ठरोगग्रस्तः, वृद्धः, शक्तिहीनश्च आसीत् । कौशिकस्य धर्मपत्नी शाण्डिली पतिम् अत्यन्तं स्निह्यति स्म । सा विदुषी दिव्यशक्तियुता च आसीत् । तस्याः मनः पतिसेवयां रमते स्म । माण्डव्यदत्तं श्रापं श्रुत्वा सा दुःखिता क्रुद्धा अभवत्, अतः कथितवती - इतः परं सूर्यः नैव उदेति इति । तस्याः श्रापेण धरित्री एव अन्धकारयुता अभूत् । अस्यां दुरवस्थायाम् अनसूया स्वशक्तिं सदुपयुक्तवती । सा कौशिकाय माण्डव्यस्य श्रापात्

मुक्तिं ददौ । कौशिकं निरामयं शक्तिसम्पन्नं च कृतवती । पश्चात् च सूर्योदयाय मार्गं निर्मापितवती । तस्याः कार्येण समेषां प्राणिनां कल्याणम् अभवत् । अनसूयायाः परोपकारिणा कर्मणा हरिहरपितामहाः प्रसन्नाः बभूवुः । ते वरग्रहणाय अनसूयां प्रेरितवन्तः । अनसूया च 'त्रिदेवानेव पुत्ररूपेण प्राप्नुयाम्' इति वरम् अयाचत । ब्रह्मा सोमरूपेण जनिं गृहीत्वा अत्रेः अनसूयायाश्च प्रथमः पुत्रः अभूत् । विष्णुः दत्तात्रेयरूपेण द्वितीयः पुत्रः अभवत् । शिवश्च दुर्वासारूपेण तस्याः तृतीयः पुत्रः सञ्जातः ।

अनसूया बहुकालं यावत् तप अकरोत् । सा दिव्यां शक्तिं प्राप्तवती । कदाचित् दशवर्षपर्यन्तं वर्षणं नाभवत् । भूमिः जर्जरतां प्राप्ता । प्राणिनः मरणासन्नाः सञ्जाताः । तदानीम् अनसूयाः स्वशक्त्या वृष्टिं कारयामास । स्वर्गाद् गङ्गाम् आनीय चित्रकूटे प्रवाहिताम् अकरोत् । सा नदी अद्यापि मन्दाकिनीति नाम्ना प्रसिद्धा अस्ति । अनसूयायाः धर्मस्य सदाचारस्य पवित्रविचारस्य च सर्वत्र चर्चा भवति ।

त्रिदेव्यः ब्रह्माणि, लक्ष्मीः पार्वती च एकदा स्वस्य सदाचारविषये अभिमानिन्यः अभवन् । ताः नारदमुखाद् अनसूयायाः आचरणं विचारं च श्रुतवत्यः । तासां मनसि ईर्ष्या समुत्पन्ना । ताश्च स्वभर्तॄन् ब्रह्मविष्णुमहेश्वरान् अनसूयायाः सदाचारस्य परीक्षार्थम् अन्वरुन्धन् । पत्नीनां गर्वहरणाय ब्रह्मविष्णुमहेश्वराश्च शिक्षकस्य स्वरूपं धृत्वा अनसूयायाः आश्रमं गतवन्तः । अनसूया च तेभ्यः सश्रद्धं भिक्षां प्राददात् । ते भिक्षां नैव अगृह्णन् । तस्याः सदाचारपरीक्षार्थं ते अकथयन्, "त्वं यदि प्रकृतिवत् निर्वस्त्रं भूत्वा भिक्षां दास्यसि तर्हि एव वयं भिक्षां गृह्णीमः ।" इति । अनसूयाः तेषां कुटिलं मनोभावं ज्ञातवती । सा नैव विचलिता । सा दिव्यशक्त्या त्रिदेवान् षाण्मासिकान् शिशून् विधाय पालनं पोषणं चारब्धवती ।

स्वकीयानां पतीनां बहुकालं यावत् स्वगृहे प्रत्यागमनं अदृष्ट्वा चिन्तिताः त्रिदेव्यः तेषां अवस्थां तत्कारणं च अविदुः । ताः अनसूयायाः आश्रमं प्राप्य त्रिदेवस्य पुनरागमनार्थं अनुनयं चक्रुः । अनसूया च त्रिदेवान् पूर्वस्वरूपान् व्यदधात् । विलक्षणा अनसूया स्वबुद्धिं शक्तिं च न दुरुपयुक्तवती । सा सर्वेषु प्राणिषु समस्वभावा आसीत् । सा

सदैव सर्वजनहितार्थाय प्रयतमाना आसीत् । अत्रेः अनसूयायाः द्वे पुत्र्यौ अभवताम्, ज्येष्ठा आत्रेयी कनिष्ठा च श्रुतिः ।

अनसूया परोपकाराय तत्परा गुणवती आदर्शनारी आसीत् । अस्याः एव प्रेरणया ऋषिणा अत्रिणा अनेकाः स्मृतयः संहिताश्च रचिताः । सा तपस्विनी, नीतिनिपुणा, कर्तव्यनिष्ठा, स्वधर्मपरायणा च विदुषी आसीत् । सा धर्मस्य सदाचारस्य च आलोकेन समाजं शिक्षितवती । कर्मणा व्यवहारेण च कः अपि महान् भवितुं शक्नोति इति तस्याः जीवनाद् ज्ञायते । इयं सर्वासां नारीणां प्रेरणायाः प्रतिमूर्तिः अस्ति ।

पौरस्त्य वाङ्मयमा पवित्र आचरण भएका धेरै नारीहरूको चर्चा पाइन्छ । ती नारीहरू विचार र व्यवहार दुवैले अनुकरणीय छन् । तिनीहरूले सबै प्राणीहरूको कल्याण गरेका छन् । तीमध्ये अनसूया पनि एक हुन् । उनको पिता कर्दम र माता देवहूति थिइन् भने कपिल उनका दाजु थिए । उनले सानैदेखि अध्ययन गर्ने मौका पाइन् । उनको विवाह महर्षि अत्रिसँग भएको थियो । सरल स्वभाव र विशिष्ट व्यवहारले उनले सबैको मन जितेकी थिइन् ।

अनसूया सदाचारको पालना गर्थिन् । उनी आफ्नो विचार पवित्र होओस् भनेर सचेत थिइन् । उनी ससाना गुणहरूको पनि प्रशंसा गर्न गर्दथिन् । उनी आफ्नो मनमा नराम्रा विचार र भावना आउन नै दिँदैनथिन् । उनमा लोभ, लाभ, क्रोध, भय जस्ता दुर्गुणहरू थिएनन् । त्यसैले उनको विचार र व्यवहारको सबैले प्रशंसा गर्थे ।

त्रेतायुगमा भगवान् रामचन्द्रसँग परिचय गराउँदै अनसूयाको बारेमा अत्रि ऋषिले भनेका थिए, “अनसूया देवताहरूको कार्यसिद्धिका लागि काम गर्छिन् । यिनी गुणी, ज्ञानी र तपस्विनी हुन् । यिनलाई क्रोधले कहिल्यै छुन सक्दैन । यिनले सम्पूर्ण प्राणीको भलाइका लागि कार्य गरेकी छिन् । तसर्थ यिनी वन्दनीय छिन् ।”

संस्कृत वाङ्मयमा एउटा कथा प्रसिद्ध छ - माण्डव्य ऋषिलाई दुर्भाग्यवश शूलीमा चढाइयो । त्यस वेला कौशिक ब्राह्मणका गोडाले शूली छोइयो र हल्लियो । यसबाट माण्डव्यलाई निकै पीडा भयो । पीडाले दुःखी भएका माण्डव्यले मलाई अनावश्यक पीडा पुऱ्याउनेको सूर्योदय हुनासाथ प्राणान्त होस् भन्ने श्राप दिए । कौशिक ब्राह्मण कुष्ठरोगले पीडित, वृद्ध र अशक्त थिए । उनकी धर्मपत्नी शाण्डिली आफ्ना पतिलाई अत्यन्त माया गर्थिन् । उनी ज्ञानी एवम् दिव्य शक्तिले सम्पन्न थिइन् । उनको मन पतिको सेवामा रमाउँथ्यो । उनले आफ्ना पतिलाई यस्तो सराप दिएको सुनेर उनी दुःखी भइन् र रिसाइन् पनि । त्यसैले "अब सूर्यको उदय नै हुने छैन" भनेर सूर्योदय नै हुन दिइनन् । शाण्डिलीको श्रापबाट सिङ्गो सृष्टिमा असर पुग्ने भयो । यस्तो अवस्थामा अनसूयाले आफूसँग भएको अलौकिक शक्तिको सदुपयोग गरिन् । उनले शाण्डिलीका पति कौशिक ब्राह्मणलाई माण्डव्यको सरापबाट मुक्त गराइन् । तिनलाई स्वस्थ, सक्षम र निरोगी बनाइन् र सूर्योदय गराइन् । यसबाट पृथ्वीमा भएका सबै प्राणीको कल्याण भयो । अनसूयाको यस्तो परोपकारी कर्मबाट ब्रह्मा, विष्णु र शिव प्रसन्न भए । उनीहरूले अनसूयालाई 'वरदान माग' भने । अनसूयाले त्रिदेवलाई नै पुत्रका रूपमा प्राप्त गर्न सकूँ भन्ने वरदान मागिन् । त्यसअनुसार नै अत्रि र अनसूयाका प्रथम पुत्रका रूपमा ब्रह्माले सोमका रूपमा जन्म लिए । यिनीहरूकै दोस्रो पुत्रका रूपमा विष्णुले दत्तात्रेय र तेस्रो पुत्रका रूपमा शिवले दुर्वासा ऋषिका रूपमा जन्म लिए ।

अनसूयाले धेरै वर्षसम्म तपस्या गरेकी थिइन् । यसबाट उनलाई दिव्य शक्ति प्राप्त भएको थियो । कुनै समय दश वर्षसम्म पानी परेन, जताततै सुक्खा भयो । प्राणी तथा वनस्पति नाश हुन थाले । यस्तो अवस्थामा अनसूयाले आफ्नो शक्तिद्वारा वर्षा गराइन् । गङ्गालाई स्वर्गबाट पृथ्वीमा ल्याई चित्रकूट भन्ने स्थानमा प्रवाहित गराइन् । त्यो आज पनि मन्दाकिनीका नामले प्रसिद्ध छ ।

अनसूयाको धर्म, आचरण र पवित्र विचारको सर्वत्र प्रशंसा गरिन्छ । त्रिदेवी लक्ष्मी, पार्वती र ब्राह्मणीलाई आफ्नो असल आचरणका विषयमा चरणमा ठुलो गर्व थियो । उनीहरूले नारदको मुखबाट अनसूयाको आचरण र व्यवहारबारे सुने । यसबाट उनीहरूलाई ईर्ष्या जाग्यो । उनीहरूले आफ्ना पति ब्रह्मा, विष्णु र शिवलाई अनसूयाको परीक्षा लिन आग्रह गरे । त्यसपछि ब्रह्मा, विष्णु र शिवले योगीको भेष धारण गरे र अनसूयाको आश्रममा गए । अनसूयाले भक्तिपूर्वक भिक्षादान गर्न खोजिन् । उनीहरूले अनसूयाको आचरणमा आँच पुऱ्याउने सोच राखे । अनसूयाले उनीहरूको भित्री मनसाय बुझिन् । यसबाट अनसूया कत्ति पनि विचलित भइनन् । उनले आफ्नो दिव्य शक्तिको प्रयोग गरेर त्रिदेवलाई छ महिनाका बच्चा बनाइन् र पालनपोषण गर्न थालिन् ।

धेरै समयसम्म आफ्ना पतिहरू घर नफर्किएपछि त्रिदेवी चिन्तित भए । उनीहरूले आफ्ना पतिको अवस्था र त्यसको कारण थाहा पाए । उनीहरू अनसूयाको आश्रममा आए र त्रिदेवलाई फिर्ता गर्न अनुनयविनय गरे । त्यसपछि अनसूयाले ब्रह्मा, विष्णु र शिवलाई पुनः उही स्वरूपका बनाइदिइन् । असाधारण क्षमता भएकी अनसूयाले आफ्नो बुद्धि, शक्ति र कार्यक्षमताको कहिल्यै दुरुपयोग गरिनन् । उनी सबै प्राणीलाई समान व्यवहार गर्थिन् र सबै प्राणीको हित हुने काम गर्थिन् । महर्षि अत्रि र अनसूयाका दुईओटी पुत्री जन्मिए, जेठी आत्रेयी, कान्छी श्रुति ।

अनसूया अरूको भलाइबारे सोच्ने गुणवती आदर्शनारी हुन् । यिनकै प्रेरणा, शक्ति र साथ पाएर अत्रि ऋषिले दर्जनौँ स्मृति र संहिता रचना गरेका छन् । यिनी परम तपस्विनी, नैतिकवान्, परोपकारी, कर्तव्यनिष्ठ एवम् धार्मिक चरित्रकी विदुषी थिइन् । यिनले समाजलाई धर्म र आचरणको पाठ सिकाइन् । कर्म र व्यवहारबाट जोकोही महान् बन्न सक्छ भन्ने पाठ अनसूयाबाट हामीले सिक्नुपर्छ । यिनी समस्त नारी जातिकी प्रेरणाकी स्रोत हुन् ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| पौरस्त्यवाङ्मयम् | प्राग्वाङ्मयम् | पौरस्त्य वाङ्मय | Orient literacy work |
| पवित्राचरणम् | पावनाचारः | असल चरित्र भएको | Having good charecter |
| अनुकरणीयः | अनुकार्यः | सिको गर्न लायक | Imitable |
| जीवमात्रस्य | समग्रप्राणिनाम् | सम्पूर्ण प्राणीहरूको | Of all creatures |
| सदाचारनिष्ठा | सच्चरित्रवती | असल आचरण भएकी | Having good charecter (Feminine gender) |
| सावधाना | एकाग्रचित्ता | सचेत | Conscious |
| गुणग्राहिणी | गुणग्राहिका | गुनको कदर गर्ने | Who respect virtuos |
| कलुषितभावना | दूषितभावना | तुच्छ विचार | Vile thought |
| परोपकारः | परहितम् | अरूको भलाइ | Welfare to other |
| दुर्भाग्यवशात् | दुर्दैवात् | दुर्भाग्यले गर्दा | Unfurtunatly |
| क्रोधवशः | क्रोधाकुलः | रिसले युक्त | Angry |
| कुष्ठरोगग्रस्तः | कुष्ठरोगपीडितः | कुष्ठरोग लागेका | Having pain of leprocy |
| शक्तिहीनः | दुर्बलः | कमजोर | Weak |
| दिव्यशक्तियुता | दिव्यशक्तिसम्पन्ना | दैवी शक्ति भएकी | Full of power of God |
| निरामयः | नीरुजः | निरोगी | Healthy |
| हरिहरपितामहाः | ब्रह्माविष्णुमहेश्वराः | ब्रह्मा, विष्णु र महेश्वर | Trinity of Gods |
| मरणासन्नाः | मृत्युनिकटाः | मर्न लागेका | Way to dieing |
| षाण्मासिकान् | षण्मासकान् | ६ महिनाका | half-yearly |
| पूर्वस्वरूपान् | पूर्ववत् | पहिलेका जस्तै | As the past |
| सर्वजनहितार्थाय | सर्वेषां कल्याणाय | सबैका भलाइका लागि | For the welfare of all |
| प्रतिमूर्तिः | प्रतिमा | प्रतिमा | Image |

## अभ्यासः

### श्रवणं भाषणञ्च

१. **पाठस्य प्रथमद्वितीयौ अनुच्छेदौ सस्वरं पठित्वा कक्षायां श्रावयत ।**

२. **शिक्षकस्य मुखात् पाठस्य अन्तिमम् अनुच्छेदं श्रुत्वा अधस्तनानां प्रश्नानामुत्तरं कथयत**

(क) अनसूया कीदृशी नारी आसीत् ?

(ख) अनसूया समाजं कीदृशं पाठं शिक्षितवती ?

(ग) ऋषिणा अत्रिणा किं रचितम् ?

(घ) जनः कथं महान् भवितुम् अर्हति ?

(ङ) अनुच्छेदाद् अनसूयायाः पञ्च विशेषणपदानि लिखत ।

३. **अधस्तनम् अनुच्छेदं सम्यक् उच्चारयत**

महिलाशिक्षायाः महद् महत्त्वम् अस्ति । सुशिक्षिता महिला एव सद्गृहिणी सत्कर्मपरायणा च भवितुं शक्नोति । शिक्षिताः स्त्रियः एव मातृभूताः सद्वंशं सद्राष्ट्रं च निर्मातुं प्रभवन्ति । शिक्षिता नारी एव सन्ततिषु सत्संस्काराधाने प्रभवति । मातृशक्तेः शास्त्रेषु महद् गौरवम् अनुश्रूयते ।

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः । मातृदेवो भव । इत्यादिवचनं समाजे महिलाया वैशिष्ट्यं प्रदर्शयन्ति ।

माता एव गृहिणी, गृहस्वामिनी, गृहलक्ष्मी इत्यादिशब्दैः नारी संस्तुता वर्तते । तत्सत्त्वादेव गृहं गृहम् उच्यते । उच्यते च यत्- न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते इति । अतः देशस्य समाजस्य च समुन्नत्यै नारीशिक्षा नितराम् आवश्यकी भवति ।

महिला शिक्षाको ठुलो महत्त्व छ । सुशिक्षित महिलाहरू नै असल गृहस्थी र राम्रो काम गर्न सक्ने हुन्छन् । शिक्षित महिलाहरूले नै आमा भएर असल कुल र असल राष्ट्र बनाउन सक्छन् । शिक्षित नारीले नै सन्तानहरूमा सुसंस्कारको बिउ रोप्न सक्छन् । शास्त्रहरूमा मातृशक्तिको महत्त्व सुनिन्छ-

जहाँ नारीहरू पुजिन्छन्, त्यहाँ देवताहरू रमाउँछन् । आमालाई देवतासमान व्यवहार गर । यस्ता वचनहरूले समाजमा महिलाको विशिष्टता प्रदर्शन गरेका छन् ।

आमालाई नै गृहिणी, घरमालिक्नी, गृहलक्ष्मी आदि पदले प्रार्थना गरिन्छ । आमा भएर नै घर घर हुन्छ । त्यसैले भौतिक घर घर होइन, घरवाली नै घर हुन् । त्यसैले देश र समाजको समुन्नतिमा नारीशिक्षा अति आवश्यक छ ।

४. **अधस्तने पद्ये स्पष्टम् उच्चारयत, शिक्षकात् अर्थं श्रुत्वा नेपालीभाषायां भावानुवादं च कुरुत**

सहसा विदधीत न क्रियाम्

अविवेकः परमापदां पदम् ।

वृणुते हि विमृश्यकारिणम्

गुणलुब्धाः स्वयमेव सम्पदः ॥

रे रे कोकिल मा भज मौनं

किञ्चिदुदञ्चय पञ्चमरागम् ।

नो चेत् त्वामिह को जानीते

काककदम्बकपिहिते चूते ॥

## ५. अनुच्छेदं श्रुत्वा प्रश्नानाम् उत्तरं वदत

मातुर्महत्त्वं अनिर्वचनीयम् अवर्णनीयम्, अनुपमेयं च अस्ति । माता ममतायाः आगारम्, गुणानां निधिः, शीलस्य मूर्तिः, विनयस्य आकरः, क्षमायाः स्नेहस्य सागरश्चास्ति । माता स्नेहं सञ्चारयति, सद्भावान् आविर्भावयति, दुर्भावान् दमयते, विनयं प्रथयति, शीलं सम्पोषयति । मातैव शिशोः सर्वस्वम् । सन सर्वदा स्वसन्ततीनां हितं चिन्तयति । सा कष्टसहस्रम् अपि तृणवत् गणयति । शिशोः संवर्धनं रक्षणं पालनं च तस्याः जीवनस्य लक्ष्यम् । अत एव तैत्तिरीयोपनिषदि मातृदेवो भव इत्यनुशिष्यते ।

(क) मातुर्महत्त्वं कीदृशम् अस्ति ?

(ख) माता किं किं करोति ?

(ग) शिशोः सर्वस्वं किम् ?

(घ) मातुर्जीवनस्य लक्ष्यं किम् ?

(ङ) तैत्तिरीयोपनिषदि किम् अनुशिष्यते ?

आमाको महत्त्व बताउन, वर्णन गर्न र उदाहरण दिन सकिँदैन । आमा ममता र गुणकी खानी हुन्, शीलस्वभावकी प्रतिमूर्ति हुन्, विनय, क्षमा र मायाकी सागर हुन् । आमा स्नेह फैलाउँछिन्, सुन्दर भावहरू सिर्जना गर्छिन्, दुर्भावनाहरूलाई दबाउँछिन्, विनयशीलतालाई चिनाउँछिन्, शीलस्वभावलाई पाल्छिन् । आमा नै सन्तानको सबथोक हुन् । आफ्नो सन्तानको कल्याण चाहने आमाले हजारौँ दुःखलाई पनि रौँबराबर मान्दिनन् । बच्चाको पालनपोषण, सुरक्षा र संवर्धन गर्नु नै उनको जीवनको लक्ष्य हो । त्यसैले तैत्तिरीयोपनिषद्मा आमालाई भगवान् मान भनेर सिकाइन्छ ।

**६. उदाहरणम् अनुसृत्य अधस्तनीः पदावलीः श्रुत्वा ताभ्यः अवगतम् अर्थम् मञ्जूषासाहाय्येन वदत**

यथा

कुष्ठरोगेण ग्रस्तः = कुष्ठरोगग्रस्तः

(क) सर्वेषां जनानां हितार्थाय =

(ख) कलुषिता च सा भावना =

(ग) निर्गतः आमयः यस्मात् =

(घ) शक्त्या हीनः =

(ङ) मरणम् आसन्नः =

सर्वजनहितार्थाय, निरामयः, कलुषितभावना, शक्तिहीनः, मरणासन्नः, कुष्ठरोगग्रस्तः

**७. अधस्तनानि वाक्यानि श्रुत्वा सत्यवाक्ये 'आम्' असत्यवाक्ये 'नहि' इति वदत**

(क) अनसूया दुराचारनिष्ठा आसीत् ।

(ख) दुर्भाग्यवशात् ऋषिः माण्डव्यः शूल्यां नियोजितः ।

(ग) विष्णु दुर्वासारूपेण अनसूयायाः पुत्रः बभूव ।

(घ) अनसूयायाः परोपकारिणा कर्मणा हरिहरपितामहाः प्रसन्नाः बभूवुः ।

(ङ) अनसूया ऋषेः वशिष्ठस्य पत्नी आसीत् ।

**८. समुचितमुत्तरं वदत**

(क) अनसूयायाः परोपकारिणा कर्मणा के प्रसन्नाः बभूवुः ?

(अ) हरिहरपितामहाः (आ) राक्षसाः (इ) स्वजनाः

(ख) अनसूयायाः द्वितीयः पुत्रः कः अभवत् ?

(अ) सोमः (आ) दुर्वासा (इ) दत्तात्रेयः

(ग) चित्रकूटे प्रवाहितायाः नद्याः नाम किम् ?

(अ) त्रिशूली (आ) मन्दाकिनी (इ) गङ्गा

(घ) अनसूया कीदृशी नारी आसीत् ?

(अ) परोपकारपरायणा (आ) आत्मोपकारपरायणा (इ) स्वार्थपरायणा

(ङ) अनसूयायाः अग्रजस्य नाम किम् ?

(अ) शिवसङ्कल्पः (आ) कपिलः (इ) अत्रिः

९. **ब्रह्माविष्णुमहेश्वरैः कृताः अनसूयायाः परीक्षा उचिता आसीत् ? मित्रसमूहे विमर्शं विधाय स्वमातृभाषायां कथयत ।**

१०. **श्रवणपाठे प्रदत्तं झमककुमार्याः चरितं श्रुत्वा कीदृशी शिक्षा लभ्यते ? स्वभाषायां कथयत ।**

## पठनम्

१. **पाठस्य तृतीयचतुर्थयोः अनुच्छेदयोः द्रुतपठनं कुरुत ।**

२. **लेख्यचिह्नं विचार्य पाठस्य प्रारम्भे प्रदत्तं संवादं पठत ।**

३. **अधो लिखितम् अनुच्छेदद्वयं मौनं पठित्वा पठने कठिनतरानुच्छेदं पुनः सस्वरं पठत**

(क) दीपोत्सवः नेपालिनां प्रसिद्धं पर्व वर्तते । अस्मिन् पर्वणि जनैः स्वस्वगृहेषु मङ्गलसूचकाः दीपाः प्रज्ज्वाल्यन्ते । अस्मिन् उत्सवे जनाः लक्ष्मीपूजनं कुर्वन्ति । भ्रातृद्वितीयायां भगिन्यो भ्रातॄन् रङ्गमिश्रितां टीकां परिधापयन्ति । पर्व इदं कार्त्तिकमासे समायोज्यते ।

(ख) रघुः कौत्सस्य आगमनम् आकर्ण्य स्वागतार्थं राजसिंहासनाद् उदतिष्ठत् । स विश्वजिन्नाम्नि यज्ञे सर्वस्वदक्षिणादानात् स्वर्णपात्राभावेन

मृत्तिकानिर्मितपात्रे एव पूजार्थम् अशेषद्रव्यं संस्थाप्य आगन्तुकम् अभ्यर्थयितुम् अयात्। स अतिथिपूजनं सम्पाद्य आगमनप्रयोजनस्य अत्यावश्यक-प्रष्टव्य-विषयं विचार्य कौत्सं प्रत्यवोचत्।

### ४. अधो लिखितं गद्यांशं पठित्वा प्रश्नान् उत्तरयत

वृक्षाणां रोपणम् अतीव लाभदायकम् अस्ति। वृक्षात् पुष्पाणि, फलानि औषधानि च लभ्यन्ते। पर्यावरणप्रदूषणम् अद्यतनी विश्वव्यापिनी समस्या अस्ति। वृक्षाणां रोपणाद् एषा समस्या समाहिता भवति। वृक्षैः वातावरणं वायुमण्डलञ्च शुद्धं भवति। प्राकृतिकशोभां वर्धयितुम् अपि वृक्षाः सहयोगिनः भवन्ति। भवननिर्माणाय च वृक्षा एव काष्ठानि यच्छन्ति। वायुमण्डलस्य मलिनधूमं विषाक्तवायुम् अपि ते एव हरन्ति। वृक्षाः प्राणिनां कृते मित्राणि उपयोगीनि भवन्ति।

(क) वृक्षरोपणेन कानि वस्तूनि लभ्यन्ते ?

(ख विश्वव्यापिनी समस्या का ?

(ग) के वायुमण्डलं शुद्धं कुर्वन्ति ?

(घ) प्राकृतिकशोभा कथं वर्धते ?

(ङ) वृक्षाः भवननिर्माणाय किं यच्छन्ति ?

(च) वृक्षाः मलिनधूमं किं कुर्वन्ति ?

### ५. अधो लिखितं गद्यांशं पठित्वा नदीनां नामानि वदत

नेपालः जलस्रोतसा धनी देशः अस्ति। अत्र कौशिकी–गण्डकी–कर्णालीनद्यः प्रवहन्ति। कौशिक्यां दुग्धकौशिकी–स्वर्णकौशिकी–ताम्रकौशिकीप्रभृतिका नद्यः मिश्रिताः सन्ति। गण्डक्यां त्रिशूली–कृष्णगण्डकी–वृद्धगण्डकीसदृश्यः नद्यः मिलिता वर्तन्ते। कर्णाल्यां च भेरी–मुगुकर्णाली–हुम्लाकर्णालीप्रभृतिका नद्यः

अन्तर्भूताः सन्ति । वागमती–बाणगङ्गा–लालबकैयानाम्न्यः नद्यश्च अस्माकं देशं सिञ्चन्ति । मेची–महाकाल्यौ नद्यौ नेपालस्य पूर्व–पश्चिमयोः सीमां निर्धारयतः ।

६. **अधस्तनलघुकथायाः शीर्षकं निर्धारयत**

गोपालः आपणं गच्छति । स तत्र आलुकं क्रेतुम् इच्छति । स कान्दविकस्य समीपं गच्छति । कान्दविकः महावञ्चकः अस्ति । स आलुकं मापनाद् न्यूनं तोलयति । गोपालः अस्य कारणं पृच्छति । कान्दविकः वदति, "तव भारस्य सुवहनाय ।" गोपालः कान्दविकाय एकेन रूप्यकेण हीनं मूल्यं ददाति । काण्डविकः सरोषं कथयति, "किमर्थं मे अल्पम् एव मूल्यं ददासि ?" गोपालः प्रतिवदति "रूप्यकाणां गणनस्य सौकर्याय ।"

७. **अधस्तनं चित्रं दृष्ट्वा प्रदत्तानां प्रश्नानाम् उत्तरं लिखित्वा मित्रस्याग्रे पठत**



(क) चित्रे कति जनाः सन्ति ?

(ख) माता किं कुर्वन्ती अस्ति ?

(ग) कति बालिकाः सन्ति ?

(घ) पिता किं कुर्वन् अस्ति ?

(ङ) बालाः किं कुर्वन्तः सन्ति ?

८. **पाठम् आधृत्य अधस्तनानां घटनानां क्रमनिर्धारणं कुरुत**

( ) क्रोधवशः माण्डव्यः श्रापम् अददात् ।

( ) दुर्भाग्यवशात् ऋषिः माण्डव्यः शूल्यां नियोजितः ।

( ) कौशिकब्राह्मणः पादेन शूलिनं पस्पर्श ।

( ) सति सूर्योदये अनावश्यककष्टदातुः मरणं स्यादिति ।

( ) शाण्डिली कथितवती- इतः परं सूर्य नैव उदेति इति ।

( ) अनसूया समस्यायाः निराकरणं कृतवती ।

## लेखनम्

१. **अधस्तनानां शब्दानां स्वमातृभाषायां संस्कृते च अर्थं लिखत**

कलुषितभावना, परोपकारः, अनुकरणीयः, दुर्भाग्यवशात्, गुणग्राहिणी, सावधाना, शक्तिहीनः, निरामयः, मरणासन्नः

२. **'विलक्षणा अनसूया स्वबुद्धिं शक्तिं च न दुरुपयुक्तवती' इति वाक्यस्य सरलार्थं लिखत ।**

३. **पाठस्याधारेण रिक्तस्थलेषु उचितं पदं लिखत**

(क) अनसूया च तेभ्यः..................................भिक्षां ददौ ।

(ख) अनसूयायाः द्वे पुत्र्यौ बभूवतुः, जेष्ठा आग्नेयी कनिष्ठा च.................।

(ग) कर्मणा....................च कः अपि महान् भवितुम् अर्हति ।

(घ) कौशिकस्य धर्मपत्नी.........................आसीत् ।

(ङ) ..................................कुष्ठरोगग्रस्तः आसीत् ।

**४. अधस्तनपदैः निर्मितानि वाक्यानि पाठात् अन्विष्य लिखत**

हरिहरपितामहाः, परोपकारिणा, वैदुष्यम्, जीवमात्रस्य, वृष्टिम्

**५. एकवाक्येन उत्तरयत**

(क) अनसूयायाः मातापित्रोः नाम्नी के ?

(ख) माण्डव्यः कीदृशं श्रापम् अददात् ?

(ग) अनसूया कीदृशं वरम् अयाचत ?

(घ) ब्रह्माणी लक्ष्मीः पार्वती च कस्य मुखात् अनसूयायाः आचरणविषये अशृण्वन् ?

(ङ) अनसूया बहुकालं यावत् किम् अकरोत् ?

(च) कौशिकब्राह्मणः किंरोगग्रस्तः आसीत् ?

(छ) अनसूयायाः परीक्षार्थं काः अन्वरुन्धन् ?

(ज) अनसूयायाः जीवनात् कीदृशी प्रेरणा प्राप्यते ?

**६. पाठस्यान्तिमस्यानुच्छेदस्य श्रुतिलेखनं कुरुत ।**

**७. पर्यायपदे परस्परं मेलयत**

| | |
|---|---|
| महिला | दुर्दशा |
| भगवान् | दुःखम् |
| कष्टम् | ईश्वरः |
| वृद्धः | मङ्गलम् |
| धरित्री | स्थविरः |
| कल्याणम् | भूमिः |
| मनः | जीवः |
| कर्म | हृदयम् |
| प्राणी | कार्यम् |
| दुरवस्था | नारी |

## व्याकरणानुशीलनम्

१. **नियमोदाहरणानुसारेण शब्दनिर्माणं कुरुत**

**नियमः**

अकारान्तपुंलिङ्गशब्देषु षष्ठीविभक्तौ वचनानुसारेण क्रमशः अस्य, अयोः, आनाम्/आणाम् इति सङ्क्षिप्तरूपाणि संयुज्यन्ते ।

**उदाहरणानि**

रामशब्दस्य षष्ठीविभक्तौ एकवचने राम+अस्य = रामस्य इति रूपं भवति ।

रामशब्दस्य षष्ठीविभक्तौ द्विवचने राम+अयोः = रामयोः इति रूपं भवति ।

रामशब्दस्य षष्ठीविभक्तौ बहुवचने राम+आणाम् = रामाणाम् इति रूपं भवति ।

(क) अग्रजशब्दस्य षष्ठीविभक्तौ एकवचने .................. रूपं भवति ।

(ख) सज्जनशब्दस्य षष्ठीविभक्तौ द्विवचने .................. रूपं भवति ।

(ग) विवेकशब्दस्य षष्ठीविभक्तौ बहुवचने .................. रूपं भवति ।

(घ) उत्साहशब्दस्य षष्ठीविभक्तौ एकवचने .................. रूपं भवति ।

(ङ) शिवराजशब्दस्य षष्ठीविभक्तौ द्विवचने .................. रूपं भवति ।

**नियमः**

आकारान्तस्त्रीलिङ्गशब्देषु षष्ठीविभक्तौ वचनानुसारेण क्रमशः आयाः, अयोः, आनाम्/आणाम् इति सङ्क्षिप्तरूपाणि संयुज्यन्ते ।

**उदाहरणानि**

रमाशब्दस्य षष्ठीविभक्तौ एकवचने रमा+आयाः = रमायाः इति रूपं भवति ।

रमाशब्दस्य षष्ठीविभक्तौ द्विवचने रमा+अयोः = रमयोः इति रूपं भवति ।

रमाशब्दस्य षष्ठीविभक्तौ बहुवचने रमा+आणाम् = रमाणाम् इति रूपं भवति ।

(क) लज्जाशब्दस्य षष्ठीविभक्तौ एकवचने ................... रूपं भवति ।

(ख) इच्छाशब्दस्य षष्ठीविभक्तौ द्विवचने ................... रूपं भवति ।

(ग) भावनाशब्दस्य षष्ठीविभक्तौ बहुवचने ................... रूपं भवति ।

(घ) चेतनाशब्दस्य षष्ठीविभक्तौ एकवचने ................... रूपं भवति ।

(ङ) उपासनाशब्दस्य षष्ठीविभक्तौ द्विवचने ................... रूपं भवति ।

अकारादिनपुंसकलिङ्गशब्देषु षष्ठीविभक्तौ वचनानुसारेण पुंलिङ्गवत् क्रमशः अस्य, अयोः, आनाम्/आणाम् इति सङ्क्षिप्तरूपाणि संयुज्यन्ते ।

**उदाहरणानि**

फलशब्दस्य षष्ठीविभक्तौ एकवचने फल+अस्य = फलस्य इति रूपं भवति ।

फलशब्दस्य षष्ठीविभक्तौ द्विवचने फल+अयोः = फलयोः इति रूपं भवति ।

फलशब्दस्य षष्ठीविभक्तौ बहुवचने फल+आनाम् = फलानाम् इति रूपं भवति ।

(क) प्रसूनशब्दस्य षष्ठीविभक्तौ एकवचने ................... रूपं भवति ।

(ख) धनशब्दस्य षष्ठीविभक्तौ द्विवचने ................... रूपं भवति ।

(ग) वनशब्दस्य षष्ठीविभक्तौ बहुवचने ................... रूपं भवति ।

(घ) उन्नयनशब्दस्य षष्ठीविभक्तौ एकवचने ................... रूपं भवति ।

(ङ) कुसुमशब्दस्य षष्ठीविभक्तौ द्विवचने ................... रूपं भवति ।

**२. तद्-शब्दस्य षष्ठीविभक्तेः रूपाणि पठित्वा रिक्तस्थानानि पूरयत**

| | **एकवचने** | **द्विवचने** | **बहुवचने** |
|---|---|---|---|
| पुंलिङ्गे | तस्य | तयोः | तेषाम् |
| स्त्रीलिङ्गे | तस्याः | तयोः | तासाम् |
| नपुंसकलिङ्गे | तस्य | तयोः | तेषाम् |

(क) रामलक्ष्मणौ भ्रातरौ आस्ताम् । .................. भ्रातृत्वम् अनुकरणीयम् आसीत् । (तद्-शब्दः, षष्ठ्याः द्विवचनम्)

(ख) हरिहरपितामहाः सृष्टिस्थितिलयकर्तारः सन्ति । .......... कार्यम् अन्योन्याश्रितम् अस्ति । (तद्, षष्ठ्याः बहुवचनम्)

(ग) अनसूया उदारहृदया नारी अस्ति । ............. पतिः अत्रिः अस्ति । (तद्, षष्ठ्याः एकवचनम्)

(घ) महिलां विना किमपि कार्यं न भवति । .............. महन्महत्त्वम् अस्ति । (तद्, षष्ठ्याः बहुवचनम्)

(ङ) गुरुः छात्रेभ्यः विद्यां वितरति । ..............का विवेचना ? (तद्, षष्ठ्याः एकवचनम्)

**३. उदाहरणं दृष्ट्वा कोष्ठकस्य पदस्य उचितं रूपं रिक्तस्थाने लिखत**

यथा - (नेपाल) ...................... काष्ठमण्डपे पशुपतिमन्दिरम् अस्ति ।
नेपालस्य काष्ठमण्डपे पशुपतिमन्दिरम् अस्ति ।

(क) पुरा (अयोध्या) .............................. नृपः दशरथः आसीत् ।

(ख) (दशरथ) .................................... चत्वारः पुत्राः आसन् ।

(ग) (ज्येष्ठ) ................................ पुत्रस्य नाम रामः आसीत् ।

(घ) (मध्यम) ............................... पुत्रस्य नाम भरतः आसीत् ।

(ङ) (राम) ................................ पत्नी सीता आसीत् ।

**४. उचितपदैः वाक्यानि पूरयत**

(क) महाभारतं ................... रचना अस्ति । (वेदव्यासस्य, वेदव्यासः, मम)

(ख) श्रीकृष्णः ................................ पुत्रः आसीत् । (वासुदेवस्य, वासुदेवयोः, वासुदेवानाम्)

(ग) कुन्ती ........................... माता आसीत् । (पाण्डवयोः, पाण्डवानाम्, कौरवाणाम्)

(घ) रामः .................. मित्रम् आसीत् । (लक्ष्मणस्य, सुग्रीवस्य, रावणस्य)

(ङ) त्रिपिटकम् .......................... धार्मिकग्रन्थः अस्ति । (बौद्धानाम्, यवनानाम्, शिखानाम्)

५. **अधः तद्-शब्दस्य पुंलिङ्गे नपुंसकलिङ्गे च रूपाणि प्रदत्तानि सन्ति । उभयोः मौनपठनं कृत्वा कस्यां कस्यां विभक्तौ भिन्नानि रूपाणि भवन्ति, कस्यां कस्यां विभक्तौ च समानानि रूपाणि भवन्ति ? कथयत**

| तद्-शब्दस्य पुंलिङ्गे | एकवचनम् | द्विवचनम् | बहुवचनम् |
| --- | --- | --- | --- |
| प्रथमा | सः | तौ | ते |
| द्वितीया | तम् | तौ | तान् |
| तृतीया | तेन | ताभ्याम् | तैः |
| चतुर्थी | तस्मै | ताभ्याम् | तेभ्यः |
| पञ्चमी | तस्मात् | ताभ्याम् | तेभ्यः |
| षष्ठी | तस्य | तयोः | तेषाम् |
| सप्तमी | तस्मिन् | तयोः | तेषु |

| तद्-शब्दस्य नपुंसकलिङ्गे | एकवचनम् | द्विवचनम् | बहुवचनम् |
| --- | --- | --- | --- |
| प्रथमा | तत् | ते | तानि |
| द्वितीया | तत् | ते | तानि |
| तृतीया | तेन | ताभ्याम् | तैः |
| चतुर्थी | तस्मै | ताभ्याम् | तेभ्यः |
| पञ्चमी | तस्मात् | ताभ्याम् | तेभ्यः |
| षष्ठी | तस्य | तयोः | तेषाम् |
| सप्तमी | तस्मिन् | तयोः | तेषु |

६. **अधः तद्-शब्दस्य स्त्रीलिङ्गे रूपाणि प्रदत्तानि सन्ति । तस्य मौनपठनं विधाय उदाहरणानुसारेण रिक्तस्थानानि पूरयत**

| **तद्-शब्दस्य स्त्रीलिङ्गे** | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| प्रथमा | सा | ते | ताः |
| द्वितीया | ताम् | ते | ताः |
| तृतीया | तया | ताभ्याम् | ताभिः |
| चतुर्थी | तस्यै | ताभ्याम् | ताभ्यः |
| पञ्चमी | तस्याः | ताभ्याम् | ताभ्यः |
| षष्ठी | तस्याः | तयोः | तासाम् |
| सप्तमी | तस्याम् | तयोः | तासु |

**उदाहरणम्**

| | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| प्रथमा | सा महिला | ते महिले | ताः महिलाः |
| द्वितीया | .............महिलाम् | ..........महिले | ..........महिलाः |
| तृतीया | .............महिलया | ............महिलाभ्याम् | .............महिलाभिः |
| चतुर्थी | .............महिलायै | ...........महिलाभ्याम् | ...........महिलाभ्यः |
| पञ्चमी | ...............महिलायाः | ...........महिलाभ्याम् | ...........महिलाभ्यः |
| षष्ठी | .............महिलायाः | ..............महिलयोः | ...........महिलानाम् |
| सप्तमी | ............महिलायाम् | ...............महिलयोः | .............महिलासु |

७. **पाठात् षष्ठीविभक्तिसम्बद्धानि पञ्च पदानि अन्विष्य लिखत ।**

## रचनात्मकः अभ्यासः

१. **अधस्तनपदानि प्रयुज्य स्वमातुः जीवनविषये दश वाक्यानि रचयत**

जन्म, पितुर्नाम, मातुर्नाम, पुत्रः, पुत्री, कर्म, शिक्षा, विशेषता, योगदानम्, महत्त्वम्

२. **अधस्तनविवरणं दृष्ट्वा शिक्षकसाहाय्येन जीवनीलेखनाभ्यासं कुरुत**

| | |
|---|---|
| वास्तविकं नाम : | विष्णुकुमारी वाइवा |
| साहित्यिकं नाम : | 'पारिजात' इति |
| जन्मसमयः : | १९९४ तमः वैक्रमाब्दः वैशाखः |
| जन्मस्थानम् : | दार्जिलिङनामकस्थानान्तर्गतं 'लिगियाचियाबगान' इति नामकस्थानम् |
| माता : | अमृतादेवी वाइवा |
| पिता : | कालुसिंह वाइवा |
| शिक्षा : | स्नातकपर्यन्तम् |
| कृतयः : | 'शिरीषको फूल, महत्ताहीन, बैँसको मान्छे' इत्यादयः |
| मृत्युः : | २०५० तमः वैक्रमाब्दः वैशाखः |

## श्रवणपाठः

घिमिरे उपनामधेयायाः झमककुमार्याः जन्म सप्तत्रिंशदुत्तरद्विसहस्रतमे वैक्रमाब्दे आषाढमासस्य पञ्चविंशतितमे दिवसे अभूत् । तस्याः पितुर्नाम कृष्णबहादुर घिमिरे आसीत् । मातुर्नाम च आशादेवी घिमिरे आसीत् । सा जन्मसमये सामान्या आसीत् । पश्चात् तस्याः शारीरिकवृद्धिः सम्यक् न अभवत् । चिकित्सकस्य परीक्षणक्रमे सा 'सेरेबल पाल्सी' इति मष्तिष्करुजा ग्रस्ता आसीत् । तस्याः हस्तपादौ न चलितवन्तौ । सा उत्थाय चलितुं न शक्नोति स्म परन्तु परेषां वार्तां श्रोतुं बोद्धुं च शक्नोति स्म । तस्याः पादयोः तिस्रः एव अङ्गुल्यः चलन्ति स्म । तासाम् ऐव साहाय्येन खादितुं वस्त्रं परिधातुं च समर्था अभवत् । शारीरिकदुर्बलतायाः कारणेन सा औपचारिकात् अध्ययनात् वञ्चिता । भ्रातृभगिन्योः पठनं श्रुत्वा सा अध्ययनाय प्रेरिता । स्वश्रमेण धूलिकणेषु पादाङ्गुष्ठ्या अक्षराणि लिखित्वा पठितुम् आरब्धवती । भातृभगिन्योः पुस्तकानां स्वाध्ययनं विधाय पश्चात् साहित्यरचनां अकरोत् । सा 'जीवन काँडा कि फूल' इति कृतिमाध्यमेन मदनपुरस्कारं प्राप्तवती । सा तस्यां कृतौ स्वकीयजीवनस्य दुःखं सङ्घर्षं च प्रस्तुतवती । सा समाजे व्याप्तस्यान्धविश्वासस्य विभेदस्य विकृतेः विसङ्गतेश्च समाप्तये विचारं प्रस्तुतवती । सा कृतिमाध्यमेन नेपालीसाहित्यस्य समाजस्य च हितं कृतवती । तस्याः मनोबलं प्रेरणादायकम् अस्ति ।

# सप्तमः पाठः

**पाठप्रवेशः**

## रामायणमहिमा

(**गृहस्य भित्तौ यज्ञं कुर्वाणानां ऋषीणां चित्रम् अस्ति। सुकल्पा तत् चित्रं पश्यन्ती वर्तते। पिता तां दृष्ट्वा स्मितवदनः कथयति।**)

पिता - पुत्रि ! अस्माकं पूर्वजानां विषये जानासि ?

पुत्री - जानामि पितः ! ऋषयः एव अस्माकं पूर्वजाः। सामाजिकविषयस्य शिक्षिका कथितवती आसीत्– "वयम् ऋषीणां सन्ततयः स्मः। अतः अस्माकं गोत्रम् अपि ऋषीणां नामभिः निर्दिश्यते।"

पिता - साधु साधु। वशिष्ठः, मौद्गल्यः, भारद्वाजः इत्यादीनि गोत्रनामानि। अतः एव अस्माकं परम्परा ऋषिपरम्परा इति कथ्यते। अतीव प्राचीना इयं परम्परा। ज्ञानस्य प्रचाराय, समाजस्य सुव्यवस्थायै च ऋषयः अनेकान् ग्रन्थान् अरचयन्। ऋषिभिः रचिताः ते ग्रन्थाः आर्षग्रन्थाः उच्यन्ते।

पुत्री - पितः ! विश्वस्य आदिकविः अपि कश्चन ऋषिः एव आसीत् इति श्रूयते। किं तत् समीचीनम् ?

पिता - सत्यम् एतत्। महर्षिः वाल्मीकिः विश्वस्य आदिकविः। तेन रचितम् आदिकाव्यं च रामायणम् अस्ति।

पुत्री - रामायणं विभिन्नासु भाषासु विद्यते इति अहं श्रुतवती अस्मि। पितः ! सत्यम् एतत् ?

पिता - आम् पुत्रि ! विभिन्नासु भाषासु एतानि रामायणानि प्रसिद्धानि सन्ति - संस्कृतभाषायाः वाल्मीकिरामायणम्, व्यासकृतम् अध्यात्मरामायणम्,

अवधभाषायाः हिन्दीसाहित्यस्य च आदिकविना तुलसीदासेन कृतं रामचरितमानसम् अपि प्रसिद्धानि सन्ति । नेपालीभाषायाः भानुभक्तीयरामायणम्, मलयालमभाषायाः टुनभट्टकृतम् अध्यात्मरामायणम्, मराठीभाषायाः एकनाथकृतं भावरथरामायणं च अस्ति । तथैव तमिलभाषायाः कम्बररामायणम्, बङ्गलाभाषायाः क्रुतिभासरामायणम्, तेलगुभाषायाः रङ्गनाथरामायणम्, उर्दूभाषायाः चक्रवस्तरामायणं चेत्यादीनि काव्यानि प्रसिद्धानि सन्ति ।

पुत्री - अहो ! 'अनन्ता रामकथा' रामायणमहाभारतयोः विषये गीतांशम् अपि जानामि पितः ! किं श्रावयेयम् ?

पिता - श्रावय तावत् ।

पुत्री - कविकोकिलवाल्मीकिविरचिता रामायणरमणीयकथा ।

कौरवपाण्डवसङ्गरमथिता महाभारतपुण्यकथा ॥

पिता - सुमधुरम् ।

पुत्री - पितः ! अद्यापि रामायणस्य कञ्चन रमणीयं प्रसङ्गं श्रावयतु ।

पिता - अस्तु श्रृणु । अद्य विश्वामित्रस्य प्रसङ्गं श्रावयामि ।

(**घरको भित्तामा यज्ञ गरिरहेका ऋषिहरूको चित्र छ । सुकल्पा त्यो चित्र हेर्दै छिन् । पिता उनलाई देखेर मुसुक्क हाँस्दै भन्नुहुन्छ ।**)

पिता - छोरी ! आफ्ना पुर्खाहरूका बारेमा थाहा छ ?

पुत्री - थाहा छ बुबा ! ऋषिहरू नै हाम्रा पुर्खा थिए । सामाजिक विषय पढाउने शिक्षिकाले भन्नुभएको थियो, हामी ऋषिहरूरूका सन्तान हौँ । त्यसैले हाम्रो गोत्र पनि ऋषिकै नामद्वारा निर्देश गरिन्छ ।

पिता - ठिक ठिक । वशिष्ठ, मौद्गल्य, भारद्वाज आदि गोत्रका नामहरू हुन् । त्यसैले हाम्रो परम्परालाई ऋषि परम्परा भनिन्छ ।

यो अत्यन्त पुरानो परम्परा हो । ज्ञानको प्रचारका लागि र समाजको सुव्यवस्थाका लागि ऋषिहरूले अनेक ग्रन्थहरूको रचना गरे । ऋषिहरूले रचना गरेका ती ग्रन्थहरूलाई आर्ष ग्रन्थ भनिन्छ ।

पुत्री - बुबा ! विश्वका आदिकवि कुनै ऋषि नै थिए भन्ने सुनिन्छ । के त्यो ठिक हो ?

पिता - ठिक हो । महर्षि वाल्मीकि विश्वका आदिकवि हुन् । उनले रचना गरेको आदिकाव्य रामायण हो ।

पुत्री - रामायण विभिन्न भाषामा छन् भन्ने मैले सुनेकी छु । बुबा ! यो तथ्य सत्य हो ?

पिता - हो छोरी ! विभिन्न भाषामा भएका यी रामायण प्रसिद्ध छन् - संस्कृत भाषाको वाल्मीकि रामायण, व्यासले रचना गरेको अध्यात्मरामायण तथा अवध भाषा र हिन्दी साहित्यका आदिकवि तुलसीदासले रचेको रामचरितमानस प्रसिद्ध छन् । नेपाली भाषामा भानुभक्तीय रामायण, मलयालम भाषामा टुनभट्टको अध्यात्मरामायण र मराठी भाषामा एकनाथले रचेको भावरथरामायण छन् । त्यसैगरी तमिल भाषामा कम्बररामायण, बङ्गलाभाषामा कृतिभासरामायण, तेलगु भाषामा रङ्गनाथ रामायण र उर्दू भाषामा चक्रवस्तरामायण लगायतका काव्यहरू प्रसिद्ध छन् ।

पुत्री - अहो ! रामको कथा त धेरै भाषामा रहेछन् । रामायण र महाभारतको विषयमा एउटा गीतको अंश पनि म जान्दछु, सुनाऊँ ?

पिता - त्यसो भए सुनाऊ न त ।

पुत्री - कोइलीसरि कवि वाल्मीकिको रामायण हो मधुर कथा
कौरव पाण्डव सबै भएको महाभारत हो पुण्य कथा ।

पिता - मिठो ।

पुत्री - बुबा ! आज पनि रामायणको कुनै रमाइलो प्रसङ्ग सुनाउनुहोस् न ।

पिता - हुन्छ सुन । आज विश्वामित्रको प्रसङ्ग सुनाउँछु ।

**मूलपाठः**

# विश्वामित्रस्य यज्ञरक्षा



पुरा हिमालयक्षेत्रे ऋषयः तपः आचरन्ति स्म। ते प्रतिदिनं यज्ञानुष्ठानम् अपि कुर्वन्ति स्म। तेषु एकः विश्वामित्रः आसीत्। विश्वामित्रः महान् तपस्वी आसीत्। स तपसा भगवन्तं शिवं सन्तोष्य शस्त्रविद्यां लब्धवान् आसीत्। तपसा भगवन्तं ब्रह्माणं समाराध्य सः 'राजर्षिः', 'ब्रह्मर्षिः' इति च पदवीद्वयं प्राप्तवान् आसीत्।

विश्वामित्रः पुरुवंशस्य महाराजस्य गाधेः पुत्रः आसीत्। ऋषित्वं प्राप्तुं तेन महत् तपः कृतम्। तपोबलस्य कारणेन विश्वामित्रः ब्रह्मर्षिषु गण्यते। तस्य आदौ नाम विश्वरथः आसीत्। तस्य पत्न्याः नाम सती आसीत्। विश्वामित्रस्य मधुच्छन्दः, धनञ्जयः, कृतदेवः, अष्टकः, कच्छपः, हारीतकः चेत्यादयः शतं पुत्राः अभवन्। एकदा विश्वामित्रः इन्द्रपदस्य प्राप्तये तपः समाचरत्। भयभीतः इन्द्रः तस्य तपः भङ्क्तुं देवाङ्गनां मेनकां प्रैषयत्। मेनकायाः गर्भात् शकुन्तला अजायत। शकुन्तलायाः विवाहः राज्ञा दुष्यन्तेन सह अभवत्।

कस्मिँश्चित् समये विश्वामित्रः यज्ञं प्रारभत। तस्य यज्ञकर्मणि विघ्नः समुत्पन्नः। मारीचः, सुबाहुः चेति राक्षसौ तस्य यज्ञे वारं वारं विघ्नम् असृजताम्। तत्प्रमुखाः राक्षसाः यज्ञवेद्यां रक्तमांसयोः वर्षणम् अकुर्वन्। शस्त्रविद्यानिपुणः अपि विश्वामित्रः तदानीं शस्त्रत्यागं कृतवान् आसीत्। अतः यज्ञरक्षा कथं भवेत् इति चिन्तया स कञ्चन उपायं व्यचारयत्।

'श्रीरामः यज्ञरक्षां कर्तुं शक्नोति' इति विचिन्त्य सः अयोध्याम् अगच्छत्। तत्र राजभवनं प्राप्य स स्वस्य यज्ञविघ्नस्य वृत्तान्तं महाराजं दशरथम् अश्रावयत्। विघ्ननिवारणाय श्रीरामं प्रेषयितुं च अन्वरुणत्। तदानीं श्रीरामः बालकः एव

आसीत् । स पूर्णतः शस्त्रविद्यां च प्राप्तवान् नासीत् । अतः यज्ञरक्षायै विश्वामित्रेण सह तस्य प्रेषणाय दशरथः सम्मतः नाभवत् । कुलगुरुः वसिष्ठः महर्षेः विश्वामित्रस्य विषये दशरथम् अबोधयत् । तदनन्तरं दशरथः स्वपुत्रौ श्रीरामलक्ष्मणौ विश्वामित्रेण सह सहर्षं प्रैषयत् ।

आश्रमं प्रति गमनकाले मार्गे विश्वामित्रः श्रीरामलक्ष्मणौ अनेकाः शस्त्रविद्याः अशिक्षयत् । स क्षुधायाः तृष्णायाश्च बला, अतिबला चेति द्वे विद्ये च उपादिशत् । श्रीरामलक्ष्मणौ शास्त्रविद्यां कुलगुरोः वसिष्ठस्य गुरुकुलात् प्राप्तवन्तौ आस्ताम् । तौ शस्त्रविद्यां च महर्षेः विश्वामित्राद् एव आप्नुताम् । एवं विश्वामित्रः श्रीरामलक्ष्मणयोः शस्त्रविद्यायाः गुरुः अभवत् ।



यात्राकाले एव विश्वामित्रस्य आज्ञया श्रीरामः यक्षिणीं ताटकाम् अहन् । यज्ञस्थलं प्राप्य यज्ञः पुनः प्रारब्धः । तत्र विघ्नकर्तारः राक्षसाः श्रीरामलक्ष्मणाभ्यां संहृताः । विश्वामित्रस्य यज्ञकर्म निर्विघ्नं सम्पन्नः । विश्वामित्रेण शिक्षितायाः शस्त्रविद्यायाः प्रायोगिकं परीक्षणं च सम्पन्नम् ।

प्राचीन कालमा हिमालयमा ऋषिहरू तपस्या गर्थे । उनीहरू सधैँ यज्ञानुष्ठान पनि गर्थे । ती ऋषिहरूमध्ये विश्वामित्र पनि एक थिए । विश्वामित्र महान् तपस्वी थिए । उनले तपस्याद्वारा भगवान् शिवलाई सन्तुष्ट गराएर उहाँबाट शस्त्रविद्या प्राप्त गरेका थिए । तपस्याद्वारा नै भगवान् ब्रह्मालाई समेत खुसी पारेर उनले 'राजर्षि' र 'ब्रह्मर्षि' दुई उपाधि पनि पाएका थिए ।

विश्वामित्र पुरुवंशका महाराज गाधिका छोरा थिए । ऋषि बन्नका लागि उनले ठुलो तपस्या गरे । तपस्याका बलका कारणबाट विश्वामित्रलाई ब्रह्मर्षिका रूपमा गनिन्छ । पहिले उनको नाम विश्वरथ थियो । उनकी श्रीमतीको नाम सती थियो । विश्वामित्रका मधुच्छन्द, धनञ्जय, कृतदेव, अष्टक, कच्छप, हारीतकलगायत सय छोरा छन् । एकपटक विश्वामित्रले इन्द्रपद प्राप्तिका लागि तपस्या गरे । डराएका इन्द्रले उनको तपस्या भङ्ग गर्न मेनकालाई पठाए । मेनकाको गर्भबाट शकुन्तला जन्मिइन् । शकुन्तलाको विवाह राजा दुष्यन्तसँग भयो ।

कुनै समयमा विश्वामित्रले यज्ञ आरम्भ गरे । उनको यज्ञकर्ममा विघ्न पर्‍यो । मारीच र सुबाहु नाम गरेका दुई राक्षसले उनको यज्ञमा पटक पटक विघ्न गरे । मारीच, सुबाहु आदि राक्षसहरू यज्ञवेदी माथि आकाशबाट रगत र मासुको वर्षा गर्थे । शस्त्रविद्यामा निपुण भए तापनि विश्वामित्रले त्यस वेला शस्त्र त्यागेका थिए । त्यसैले यज्ञरक्षा कसरी होला भन्ने चिन्ताले सताएका उनले एउटा उपाय विचार गरे ।

श्रीराम यज्ञरक्षा गर्न समर्थ भएको विचार गरेर उनी अयोध्या गए । त्यहाँ राजभवनमा पुगेर उनले आफ्नो यज्ञमा विघ्न परेको वृत्तान्त महाराज दशरथलाई सुनाए । विघ्ननिवारणका लागि श्रीरामलाई आफूसँग पठाइदिन पनि आग्रह गरे । त्यस वेला श्रीराम बालक नै हुनुहुन्थ्यो । उहाँले शस्त्रविद्या सिक्नुभएको पनि थिएन । त्यसैले यज्ञरक्षाका लागि विश्वामित्रसँग श्रीरामलाई पठाउन दशरथ सहमत भएनन् । कुलगुरु वसिष्ठले महर्षि विश्वामित्रका विषयमा दशरथलाई सम्झाउनुभयो । त्यसपछि दशरथले प्रसन्नतापूर्वक आफ्ना छोराहरू श्रीराम र लक्ष्मणलाई विश्वामित्रका साथमा पठाउनुभयो ।

आश्रममा जाँदा बाटोमा विश्वामित्रले श्रीराम र लक्ष्मणलाई अनेकौँ शस्त्रविद्याको शिक्षा दिनुभयो । उहाँले भोक र प्यासको निवारक बला र अतिबला नामका दुई विद्याको पनि उपदेश दिनुभयो । श्रीराम र लक्ष्मणले शास्त्रविद्या कुलगुरु वसिष्ठको गुरुकुलबाट पाउनुभएको थियो । शस्त्रविद्या चाहिँ महर्षि विश्वामित्रबाट नै पाउनुभयो । यसरी विश्वामित्र श्रीराम र लक्ष्मणका शस्त्रविद्याका गुरु बन्नुभयो ।

यात्राकालमै विश्वामित्रका आज्ञाले श्रीरामले यक्षिणी ताडकाको वध गर्नुभयो । यज्ञस्थलमा पुगेपछि यज्ञ फेरि आरम्भ गरियो । श्रीराम र लक्ष्मणले त्यहाँ विघ्न गर्ने राक्षसहरूको संहार गर्नुभयो । विश्वामित्रको यज्ञकर्म निर्विघ्नतापूर्वक सम्पन्न भयो । विश्वामित्रले सिकाएको शस्त्रविद्याको प्रायोगिक परीक्षणसमेत सम्पन्न भयो ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| पुरा | प्राचीनकाले | पुरानो समयमा | In ancient times |
| हिमालयः | हिमशैलः | हिमाल | Mountain |
| पदवी | उपाधिः | पदवी | Degree |
| विघ्नः | व्यवधानम् | बाधा | Disrupt |
| वारं वारम् | पुनः पुनः | पटक पटक | Again and again |
| रक्तम् | शोणितम् | रगत | Blood |
| मांसः | पिशितम् | मासु | Meat |
| वर्षणम् | वर्षा | झरी | Rain |
| निपुणः | दक्षः | सिपालु | Skillful |
| वृत्तान्तः | वार्ता | पूरा विवरण | Story |
| अतः | तस्मात् कारणात् | त्यसैले | Therefore |
| सम्मतः | अभिमतः | मञ्जुर भएको | Agree |
| सहर्षम् | सप्रसादम् | खुसीसाथ | Happily |
| गुरुः | उपदेष्टा | गुरु | Guru/Preacher |

| | | | |
|---|---|---|---|
| राक्षसाः | दानवाः | राक्षसहरू | Monster |
| निर्विघ्नम् | निर्व्यवधानम् | विघ्नविना | uninterrupted |
| प्रायोगिकम् | प्रयोगात्मकम् | व्यावहारिक | Practical |
| परीक्षणम् | मूल्याङ्कनम् | परीक्षण | Evaluation |

## अभ्यासः

### श्रवणम् भाषणम् च

१. **पाठस्य कथां श्रुत्वा तत्कथां स्वमातृभाषया कक्षायां श्रावयत ।**

२. **मित्रात् पाठस्य तृतीयम् अनुच्छेदं श्रुत्वा प्रश्नान् उत्तरयत**

(क) श्रीरामः पूर्णतः किं प्राप्तवान् नासीत् ?

(ख) कः केन सह सम्मतः नाभवत् ?

(ग) दशरथस्य कुलगुरुः कः आसीत् ?

(घ) दशरथः विश्वामित्रेण सह कौ प्रैषयत् ?

(ङ) वसिष्ठः कस्य विषये दशरथम् अबोधयत् ?

(च) विश्वामित्रः किं विचिन्त्य अयोध्याम् अगच्छत् ?

(छ) विश्वामित्रः यज्ञविघ्नस्य वृत्तान्तं कम् अश्रावयत् ?

३. **शिक्षकात् पदानि श्रुत्वा अनुवाचयत**

कस्मिँश्चित्, प्रारभत, यज्ञकर्मणि, असृजताम्, तत्प्रमुखाः, यज्ञवेद्याम्, रक्तमांसयोः, शस्त्रविद्यानिपुणः, यज्ञरक्षा, कञ्चन, व्यचारयत्, श्रीरामः, अयोध्याम्, यज्ञविघ्नस्य, वृत्तान्तम्, अश्रावयत्, विघ्ननिवारणाय, प्रेषयितुम्, अन्वरुणत्, अबोधयत्, तदनन्तरं प्रैषयत्, क्षुत्तृन्निवारके ।

**४. पाठस्य कथायाः द्रुतवाचनं कुरुत ।**

**५. पाठस्य एकैकम् अनुच्छेदं क्रमेण एकाकी उच्चारयत ।**

**६. रेखाङ्कितानि पदानि प्रयुज्य स्वशब्दैः पृथग् वाक्यानि श्रावयत**

(क) मार्गे यानानि चलन्ति ।

(ख) विश्वामित्रः महान् ऋषिः आसीत् ।

(ग) छात्राणाम् अनेकाः जिज्ञासाः भवन्ति ।

(घ) गुरुः शिष्यान् उपादिशत् ।

(ङ) अर्जुनस्य शस्त्रविद्यायाः गुरुः द्रोणाचार्यः आसीत् ।

**७. शिक्षकाद् वसिष्ठस्य विषये श्रुत्वा परस्परं विमृशत ।**

**८. श्रवणपाठं श्रुत्वा समीचीनार्थे 'आम्', असमीचीनार्थे 'न' इति वदत**

(क) कुटीरे वाल्मीकिः वसति स्म ।

(ख) वाल्मीकेः एकः शिष्यः आसीत् ।

(ग) व्याधस्य बाणेन क्रौञ्ची मृता ।

(घ) मुनिः क्रौञ्चम् अशपत् ।

(ङ) 'मा निषाद' इति आदिश्लोकः वर्तते ।

## पठनम्

**१. पाठस्य कथां सस्वरं पठित्वा सारं वदत ।**

**२. पाठस्य तृतीयानुच्छेदस्य द्रुतपठनं कृत्वा पात्रनामानि लिखत ।**

## ३. पाठस्य द्वितीयम् अनुच्छेदं पठित्वा प्रदत्तान् प्रश्नान् उत्तरयत

(क) विश्वामित्रः कस्य पुत्रः आसीत् ?

(ख) किमर्थं विश्वामित्रः ब्रह्मर्षित्वेन गण्यते ?

(ग) विश्वामित्रस्य पत्नी का आसीत् ?

(घ) विश्वामित्रस्य कति पुत्राः आसन् ?

(ङ) विश्वामित्रस्य तपोभङ्गार्थम् इन्द्रः कां प्रैषयत् ?

(च) शकुन्तला कस्याः पुत्री आसीत् ?

## ४. कथां पठित्वा उत्तरयत

कश्चनः यात्रिकः मार्गे गच्छन् आसीत् । यात्रया सः श्रान्तः अभवत् । क्षणं विश्रामं कर्तुं वटवृक्षस्य अधस्ताद् उपाविशत् । वृक्षस्य निकटे क्षेत्रम् आसीत् । क्षेत्रे स कूष्माण्डलतिकाम् अपश्यत् । लतिकायां कूष्माण्डानि विकसितानि आसन् । सः अचिन्तयत्, “ईश्वरस्य बुद्धिः नास्ति । यतो हि अस्मिन् विशाले वटवृक्षे लघु फलं वर्तते परन्तु लघ्व्यां लतिकायां तावद् महत् कूष्माण्डम् ? अतः दोषपूर्णा तस्य सृष्टिः” इति । तस्मिन् एव क्षणे एकं वटफलं तस्य जनस्य शिरसि अपतत् । उपरिष्टाद् वेगेन पतनात् शिरसि ईषत् पीडा अपि जाता । स पुनः अचिन्तयत्, “ईश्वरस्य सृष्टिः सामान्या नास्ति । अत्यन्तं बुद्धिपूर्णा वर्तते । यतो हि वटवृक्षात् कूष्माण्डम् इव फलं पतितं चेत् मम का दशा भवेत्” इति । स जनः मनसा ईश्वराय धन्यवादम् अर्पयन् ततः अचलत् ।

(क) कः मार्गे गच्छन् आसीत् ?

(ख) यात्रिकः कुत्र उपाविशत् ?

(ग) वृक्षस्य निकटे किम् आसीत् ?

(घ) कूष्माण्डलतिका कुत्र आसीत् ?

(ङ) वटफलं कुत्र अपतत् ?

(च) कस्य सृष्टिः सामान्या नास्ति ?

(छ) जनः कस्मै धन्यवादम् आर्पयत् ?

(ज) लतिकायां किं विकसितम् आसीत् ?

एक यात्री सडकमा हिँडिरहेको थियो । ऊ यात्राबाट थकित थियो । यात्री केही समयका लागि आराम गर्न वरको रुखमुनि बस्यो । त्यहाँ रुखको नजिक खेत थियो । खेतमा उसले कुभिन्डोको लहरा देख्यो । लहरामा ठुला ठुला कुभिन्डोहरू फलेका थिए । उनले सोच्यो, "भगवान्सँग ज्ञान छैन किनकि यो विशाल वरको रुखमा सानो फल छ तर त्यहाँ सानो लहरामा ठुलो फल छ । त्यसकारण यो भगवान्को दोषपूर्ण सृष्टि हो ।" केही क्षणमा वरको एक फल यात्रीको टाउकामा खस्यो । वेगले खसेका कारण टाउकामा लागि उसलाई केही दुख्यो । उसले फेरि सोच्यो, "ईश्वरको सृष्टि सामान्य छैन । अत्यन्त बुद्धिपूर्ण छ । यदि वरको रुखबाट कुभिन्डो जत्रै फल मेरो टाउकामा खसेको भए मेरो कुन दशा हुन्थ्यो ?" उसले मनमनै भगवान्लाई धन्यवाद दिँदै त्यहाँबाट बाटो लाग्यो ।

## ५. पठितकथाधारेण विलुप्तानि पदानि वदत

"ईश्वरस्य ............. नास्ति । यतो हि अस्मिन् विशाले ............. लघु फलं वर्तते ............. लघ्व्यां लतिकायां तावत् लघु ............. ? अतः दोषपूर्णा ............. सृष्टिः" इति । ............. एव क्षणे ............. वटफलं तस्य जनस्य ............. अपतत् । उपरिष्टात् ............. पतनात् शिरसि ............. पीडा अपि जाता । ............. पुनः अचिन्तयत्- "............. सृष्टिः सामान्या ............. । अत्यन्तं बुद्धिपूर्णा वर्तते । यतो हि वटवृक्षात् ............. फलं पतितं चेत् मम का ............. भवेत्" इति । स ............. मनसा ............. धन्यवादम् अर्पयन् ततः अचलत् ।

## ६. अधोलिखितं गद्यभागं पठित्वा पशूनां पक्षिणां च नामानि लिखत

अरुणः तरुणः वरुणश्च भ्रातरः सन्ति । अद्य विद्यालये अवकाशः वर्तते । ते निकुञ्जं गच्छन्ति । ते सुप्तान् सिंहान् पश्यन्ति । तत्र गजाः सन्ति । काकाः उड्डीयन्ते । कोकिलः मधुरध्वनिं प्रकटयति । वृक्षेषु वानराः सन्ति । तत्रैव गावः

अपि चरन्तिः । निकटे एव अश्वाः धावन्ति । तत्रैव उलूकः वर्तते । ताम्रचूडः अन्नम् अपहरति । कलहंसः जले अस्ति । मृगः अपि जलं पिबति । गर्दभः भारं वहति । शूकरः मृत्तिकां खनति । तत्र शिखी कीटं खादति । निकुञ्जः शोभायमानः वर्तते ।

| पशवः | पक्षिणः |
|---|---|
| ....... | ........ |

७. **सद्वाक्ये "आम्", असद्वाक्ये "न" इति लिखत**

(क) जन्तुशालायां जन्तव एव भवन्ति ।

(ख) मयूराः विचित्राः भवन्ति ।

(ग) पिककाकयोः समानरङ्गः भवति ।

(घ) स्थलजन्तुषु गजः विशालतमः भवति ।

(ङ) कलहंसः चतुर्भिः पादैः चलति ।

(च) मेषजम्बुकयोः जम्बुकः धूर्तः न भवति ।

८. **रिक्तस्थानं पूरयत**

(क) घोटकाद् मृगः ........... भवति । (अल्पतरः/विशालतरः)

(ख) मयूराद् हंसः ........... भवति । (विशालतरः/अल्पतरः)

(ग) कोलात् सिंहः ........... भवति । (अल्पतरः/विशालतरः)

(घ) खराद् जम्बुकः ........... भवति । (विशालतरः/अल्पतरः)

(ङ) वायसात् कीरः ........... भवति । (अल्पतरः/विशालतरः)

(च) चटकात् कपोतः ........... भवति । (विशालतरः/अल्पतरः)

(छ) कुक्कुरात् कलरवः ........... भवति । (अल्पतरः/विशालतरः)

**९. अधस्तनं पद्यं पठित्वा सप्तर्षीणां नामानि लिखत**

कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।
जमदग्निर्वसिष्ठश्च ह्येते सप्तर्षयः स्मृताः ॥

## लेखनम्

**१. प्रदत्तां नामसूचीं पठित्वा पाठस्य कथायाः पात्राणि एव अभ्यासपुस्तिकायां लिखत**

विश्वामित्रः, मेनका, शिवः, सुबाहुः, भरतः, श्रीरामः, कैकेयी, लक्ष्मणः, मारीचः, दशरथः, वसिष्ठः, अरुन्धती, ताटका, शकुन्तला ।

**२. पाठाधारेण पूर्णवाक्येन प्रश्नान् उत्तरयत**

(क) ऋषयः कुत्र तपः आचरन्ति स्म ?

(ख) ऋषयः कदा यज्ञानुष्ठानं कुर्वन्ति स्म ?

(ग) कः महान् तपस्वी आसीत् ?

(घ) विश्वामित्रः कथं शस्त्रविद्यां लब्धवान् ?

(ङ) विश्वामित्रेण प्राप्तं पदवीद्वयं किम् ?

(च) कस्य यज्ञकर्मणि विघ्नः समुत्पन्नः ?

(छ) यज्ञे कौ विघ्नम् असृजताम् ?

(ज) राक्षसाः कुत्र रक्तमांसयोः वर्षणम् अकुर्वन् ?

(झ) कः शस्त्रविद्यानिपुणः आसीत् ?

(ञ) विश्वामित्रः किं व्यचारयत् ?

**३. पाठस्य अन्तिमस्य अनुच्छेदस्य श्रुतलेखनं कुरुत ।**

## ४. अधःस्थानां पदानां पर्यायपदानि पाठाद् अन्विष्य लिखत

(क) प्राचीनकाले – ..............

(ख) शङ्करम् – ..............

(ग) दैत्याः – ...............

(घ) यज्ञसंरक्षणाय – ...............

(ङ) बुभुक्षायाः – ...............

(च) हिमशैलः – ...............

## ५. पाठाधारेण रिक्तस्थानं पूरयत

आश्रमं प्रति ............. मार्गे विश्वामित्रः ............. अनेकाः ............. अशिक्षयत् । स ............. बला, अतिबला ............. द्वे विद्ये च उपादिशत् । श्रीरामलक्ष्मणौ ............. कुलगुरोः वसिष्ठस्य ............. प्राप्तवन्तौ आस्ताम् । ............. शस्त्रविद्या च ............. विश्वामित्राद् एव ............. । एवं विश्वामित्रः श्रीरामलक्ष्मणयोः ............. गुरुः अभवत् ।

## ६. उदाहरणानुसारेण रिक्तस्थानं पूरयत

उदाहरणम्– ऋषिः .......... करोति । (ध्यान)

ऋषिः ध्यानं करोति ।

(क) छात्रः .......... करोति । (गृहकार्य)

(ख) कृषकः .......... करोति । (कृषि)

(ग) शिक्षकः .......... करोति । (शिक्षण)

(घ) मेघः .......... करोति । (वर्षण)

(ङ) सूर्य .......... करोति । (प्रकाश)

## व्याकरणानुशीलनम्

१. **उदाहरणानुसारेण रिक्तस्थानं पूरयत**

उदाहरणम्

श्रीरामस्य यत् राज्यम्, तत् एव भरतस्य ।

(क) गुरुः ............ कथयति, तत् करोति ।

(ख) श्रीकृष्णः यत् कथयति, ............ अर्जुनः पालयति ।

(ग) याज्ञवल्क्यः ............ उपदिशति, जनकः तत् चिन्तयति ।

(घ) माता यत् पचति, ............ भोजयति ।

(ङ) शिक्षकः ............ पाठयति, छात्राः तत् पठन्ति ।

२. **नियमोदाहरणानुसारेण रिक्तस्थानं पूरयत**

**नियमः**

स्/तवर्गः + श्/चवर्गः = श्/चवर्गः ।

**यथा** – सत् + <u>चित्</u> = सच्चित्

तद् + <u>जातम्</u> = तज्जातम्

(क) बृहद् + झरः = ..............................

(ख) शत्रून् + जयति = ..............................

(ग) एतत् + छाया = ..............................

(घ) यावद् + जीवेत् = ..............................

(ङ) सद् + जनः = ..............................

(च) सच्चरित्रम् = ..............+...............

(छ) जगज्जननी = ..............+...............

(ज) उच्चारणम्  = ...............+................

(झ) निश्छलः  = ...............+................

(ञ) दुश्शासनः  = ...............+................

३. **उदाहरणानुसारेण रिक्तस्थानं पूरयत**

उदाहरणम्

सिंहः ............. निवसति । (वन)

सिंहः **वने** निवसति ।

(क) मूषकः ............. निवसति । (बिल)

(क) पक्षी ............. निवसति । (नीड)

(क) मत्स्यः ............. निवसति । (जल)

(क) गौः ............. निवसति । (गोष्ठ)

(क) वानरः ............. निवसति । (वृक्ष)

## रचनात्मकः अभ्यासः

१. **श्रुतपूर्वां काञ्चन कथां कक्षायां श्रावयत ।**

२. **अधोलिखितानि सूत्राणि आधृत्य एकम् अनुच्छेदं लिखत**

- वर्तमानयुगम् विज्ञानमयम् ।
- द्विचक्रिकायानम्
- वाष्पयानम्
- आकाशवाणी यन्त्रम्
- दूरदर्शनम्
- मुद्रणयन्त्रम्
- वायुयानम्
- दूरभाषयन्त्रम्

३. **दूरभाषस्योपगिता इति शीर्षकम् अवलम्ब्य एकं लघु-अनुच्छदं लिखत ।**

## श्रवणपाठः

एकं वनम् आसीत् । वने कुटीरः आसीत् । कुटीरे महर्षिः वाल्मीकिः वसति स्म । तेन सह केचन शिष्याश्च आसन् । एकदा स स्वशिष्यैः सह स्नातुं गतः आसीत् । स्नात्वा आगमनकाले मार्गे एका घटना सञ्जाता । कश्चन व्याधः स्वबाणेन क्रौचपक्षिणम् अमारयत् । तस्य मरणम् असहमाना क्रौञ्ची भृशं व्यलपत् । तद् दृष्ट्वा मुनिः परं दुःखम् अन्वभवत् । तस्य व्याधं प्रति क्रोधः समुत्पन्नः । मुनिः कोपेन व्याधम् अशपत् । मुनेः शापः श्लोकरूपेण प्रकटितः । अयं श्लोकः एव संस्कृतस्य लौकिकसाहित्ये आदिश्लोकः इति मन्यते । पश्चाद् वाल्मीकिः श्लोकबद्धां रामायणीं कथाम् अरचयत् । तद् वाल्मीकिरामायणञ्च आदिकाव्यम् इति कथ्यते । स आदिश्लोकः अस्ति–

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥**

**पाठप्रवेशः**

# अन्नपूर्णा पार्वती

लक्ष्मणः चौधरी कैलालीमण्डले निवसति । तस्य गृहे पितामही, पिता, माता, अग्रजा च सन्ति । तस्य माता पिता च कृषिं कुरुतः । पितामही गृहे तिष्ठति । प्रायेण सा एव भोजनं पचति । लक्ष्मणः पञ्चमकक्षायां पठति । तस्य अग्रजा नवमकक्षायां पठति । प्रातः सायं च ते सर्वे सहैव भोजनं कुर्वन्ति । भोजनात् पूर्वं लक्ष्मणः पीठिकाः व्यवस्थापयति । अग्रजा पीठिकाग्रे भोजनपात्राणि स्थापयति । माता प्रथमम् अग्नये भोजनं समर्पयति । ततः सा काकस्य शुनकस्य गवां च कृते भोजनं परिवेशयति । अग्रजा काकाय शुनकाय च भोजनं ददाति । लक्ष्मणः गोभ्यः भोजनं ददाति । ततः सर्वे स्वपीठिकासु तिष्ठन्ति । माता सर्वेभ्यः भोजनं परिवेशयति । सर्वे भोजनं प्रार्थयन्ते -

**अन्नं ब्रह्मा रसो विष्णुः पक्ता देवो महेश्वरः ।**
**एवं ज्ञात्वा तु यो भुङ्क्ते अन्नदोषैर्न लिप्यते ॥**
**अन्नपूर्णे सदा पूर्णे शङ्करप्राणवल्लभे ।**
**ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति ॥**

ततः प्रथमं पितामही भोजनम् आरभते । अनन्तरं सर्वे भोजनं कुर्वन्ति । पितामही भोजनाचारस्य विषये वारं वारं शिक्षयति ।

लक्ष्मण चौधरी कैलाली जिल्लामा बस्छन् । उनको घरमा हजुरआमा, बुबा, आमा र दिदी हुनुहुन्छ । उनका आमा र बुबा खेती गर्नुहुन्छ । हजुरआमा घरमै बस्नुहुन्छ । प्रायः उहाँले नै भोजन पकाउनुहुन्छ । लक्ष्मण पाँच कक्षामा पढ्छन् । उनकी दिदी नौ कक्षामा पढ्नुहुन्छ । बिहान र बेलुका सबै जना सँगै भोजन गर्छन् । भोजनभन्दा अगाडि लक्ष्मण पिर्काहरू मिलाउँछन् । दिदी पिर्काअगाडि खाना खाने भाँडाहरू राख्नुहुन्छ । आमा पहिला अग्निलाई भोजन समर्पण गर्नुहुन्छ । त्यसपछि काग, कुकुर र गाईका लागि भोजन पस्कनुहुन्छ । दिदी काग र कुकुरलाई भोजन दिनुहुन्छ । लक्ष्मण गाईलाई भोजन दिन्छन् । त्यसपछि सबै जना आआफ्ना पिर्कामा बस्छन् । आमा सबैलाई भोजन पस्कनुहुन्छ ।

सबै जना भोजनको प्रार्थना गर्छन्-

'अन्न ब्रह्माको स्वरूप हो, रस विष्णुको स्वरूप हो, पकाउने स्वयम् महेश्वर भगवान् हुनुहुन्छ । यस्तो विचार गरेर जसले भोजन गर्दछ, उसलाई अन्नका दोषहरूले छुँदैनन् । हे भगवान् ! शङ्करको पनि प्राण धारण गराउने अन्नपूर्णा पार्वती देवी ! ज्ञान र वैराग्यको सिद्धिका लागि हजुर मलाई भिक्षा दिनुहोस् ।'

यति प्रार्थना गरेपछि पहिला हजुरआमा भोजन सुरु गर्नुहुन्छ । त्यसपछि सबै जना भोजन गर्छन् । हजुरआमा भोजनसम्बन्धी आचारका विषयमा बारम्बार सिकाउनुहुन्छ ।

**मूलपाठः**

# भोजनाचारः

**पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ।**
**दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥१॥**
**पूजितं ह्यशनं नित्यं बलमूर्जं च यच्छति ।**
**अपूजितं तु तद्भुक्तमुभयं नाशयेदिदम् ॥२॥**
**नोच्छिष्टं कस्यचिद् दद्यान्नाद्याच्चैव तथान्तरा ।**
**न चैवात्यशनं कुर्यान्न चोच्छिष्टः क्वचिद् व्रजेत् ॥३॥**
**अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् ।**
**अपुण्यं लोकविद्विष्टं तस्मात् तत् परिवर्जयेत् ॥४॥**
**यावद् भ्रियेत जठरं तावत् सत्त्वं हि देहिनाम् ।**
**अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ॥५॥**

**१**
**अन्वयः**

अशनं नित्यं पूजयेत् । एतद् अकुत्सयन् अद्यात् । (अशनम्) दृष्ट्वा हृष्येत् प्रसीदेत् सर्वशः प्रतिनन्देत् च ।

**सरलार्थः**

भोजनम् अस्माकं शरीरस्य पोषणं करोति । अतः भोजनस्य सदा आदरः कर्तव्यः । भोजनं यादृशम् अपि भवेत्, तस्य निन्दा न कर्तव्या, अनिन्दया एव भोजनं ग्रहीतव्यम् । भोजनं दृष्ट्वा जनः सन्तुष्टः भवेत्, प्रसन्नः भवेत् । जनः सन्तोषेण हर्षेण च युतः भोजनस्य प्रशंसां कुर्वन् तस्य ग्रहणं कुर्यात् ।

भोजनले हाम्रो शरीरको पोषण गर्दछ । त्यसैले भोजनको सधैँ आदर गर्नुपर्दछ । भोजन जस्तो भए पनि त्यसको निन्दा गर्नुहुँदैन । निन्दा नगरीकन भोजन ग्रहण गर्नुपर्दछ । भोजनलाई देखेर मानिस सन्तुष्ट र प्रसन्न हुनुपर्दछ । सन्तोष र हर्षका साथ भोजनको प्रशंसा गर्दै भोजन ग्रहण गर्नुपर्दछ ।

**२**
**अन्वयः**

हि पूजितम् अशनं नित्यं बलम् ऊर्जं च यच्छति । अपूजितं भुक्तं तत् तु इदम् उभयं नाशयेत् ।

**सरलार्थः**

आदरेण गृहीतं भोजनं जनाय शक्तिम् उत्साहं च ददाति । अनादरेण गृहीतं भोजनं तु शक्तिम् उत्साहं च उभयम् अपि नाशयति ।

आदरका साथ ग्रहण गरेको भोजनले मानिसलाई शक्ति र उत्साह दिन्छ । अनादर गरेर ग्रहण गरेको भोजनले शक्ति र उत्साह दुवैको नाश गर्दछ ।

**३**
**अन्वयः**

कस्यचिद् उच्छिष्टं न दद्यात्, न अद्यात् च । तथा अन्तरा (न अद्यात्) । अत्यशनं च न कुर्यात् । उच्छिष्टः क्वचिद् न व्रजेत् ।

**सरलार्थः**

कस्मैचिद् अपि जनाय उच्छिष्टं भोजनं न दातव्यम् । तथैव स्वयं च कस्यचिद् उच्छिष्टं भोजनं न गृह्णीत । सन्ध्याकाले भोजनं न कर्तव्यम् । अतिभोजनं च जनेन कदापि न कर्तव्यम् । भोजनानन्तरम् उच्छिष्टः एव सन् जनः कुत्रचिद् अपि न गच्छेत् ।

कुनै पनि मानिसलाई जुठो भोजन दिनुहुँदैन । त्यसैगरी आफूले पनि कसैको जुठो भोजन ग्रहण गर्नुहुँदैन । साँझको समयमा भोजन गर्नुहुँदैन । मिठो भयो भन्दैमा धेरै भोजन कहिल्यै गर्नुहुँदैन । भोजन गरिसकेपछि हातमुख सफा नगरीकन जुठै भएर कहिल्यै कतै जानुहुँदैन ।

**४**
**अन्वयः**

अतिभोजनम् अनारोग्यम् अनायुष्यम् अस्वर्ग्यं अपुण्यं लोकविद्विष्टं च भवति । तस्मात् तत् परिवर्जयेत् ।

**सरलार्थः**

अतिभोजनं जनस्य स्वास्थ्यम् आयुष्यं पुण्यं च नाशयति । अतः अतिभोजनकारी जनः कदापि सुखं स्वर्गं च न प्राप्नोति । सामाजिकाः जनाः अतिभोजनकारिणं जनं निन्दन्ति । अतः सर्वथा अतिभोजनं वर्जनीयम् ।

अतिभोजनले मानिसको स्वास्थ्य, आयु र पुण्यको नाश गर्दछ। त्यसकारण अतिभोजन गर्ने मानिसले कहिल्यै सुख र स्वर्ग प्राप्त गर्न सक्दैन । समाजका मान्य मानिसहरू अतिभोजन गर्ने मानिसको निन्दा गर्दछन्। त्यसकारण हरप्रकारले अतिभोजन त्याग्नुपर्दछ ।

**५**
**अन्वयः**

यावद् जठरं भ्रियेत तावत् हि देहिनां सत्त्वम् (अस्ति) । यः अधिकम् अभिमन्येत स स्तेनः दण्डम् अर्हति ।

**सरलार्थः**

जनेन उदरपूर्तये भोजनं कर्तव्यम्। उदरपूर्तये यावद् भोजनम् आवश्यकं भवति तावद् एव भोजनं जनेन ग्रहीतव्यम्। ततः अधिकभोजनस्य इच्छां यः करोति स चौरः अस्ति, सः दण्डनीयः भवति ।

मानिसले पेट भर्नका लागि भोजन गर्नुपर्दछ । पेट भर्नका लागि जति भोजन आवश्यक हुन्छ । त्यति नै भोजनमात्र मानिसले ग्रहण गर्नुपर्छ । पेट भरिनेभन्दा बढी भोजनको अपेक्षा जसले गर्दछ त्यो चोर हो, त्यसलाई दण्ड दिनुपर्दछ ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| अशनम् | भोजनम् | भोजन | Food |
| अद्यात् | खादेत् | खाओस् | Let eat |
| अकुत्सयन् | अनिन्दन् | निन्दा नगरीकन | Without contempt |
| प्रतिनन्देत् | प्रशंसेत् | प्रशंसा गरोस् | Let appreciate |
| ऊर्जम् | शक्तिः | शक्तिः | Power |
| उच्छिष्टम् | भुक्तशेषम् | जुठो | Remaining of eating |
| क्वचित् | कुत्रचित् | कहीँ | Anywhere |
| लोकविद्विष्टम् | लोकनिन्दितम् | समाजले निन्दा गरेको | Censured by society |
| परिवर्जयेत् | त्यजेत् | त्यागोस् | Let abandon |
| भ्रियेत | बिभृयात् | भरिएला | Will be fulfilled |
| जठरम् | उदरम् | पेट | Stomach |
| स्तेनः | चौरः | चोर | Thief |

## अभ्यासः

**श्रवणं भाषणं च**

१. **शिक्षकमुखात् श्रुत्वा पाठस्य पद्यानि सलयम् अनुवाचयत ।**

२. **मित्रमुखात् श्रुत्वा अधस्तनानि पदानि शुद्धतया उच्चारयत**

अद्याच्चैतदकुत्सयन्, हृष्येत्, ह्यशनम्, नोच्छिष्टम्, चैवात्यशनम्, अनायुष्यम्, लोकविद्विष्टम्, भ्रियेत

**३. अधस्तनस्य पद्यस्य अन्वयं कथयत**

यावद् भ्रियेत जठरं तावत् सत्त्वं हि देहिनाम् ।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ॥

**४. पाठस्य तृतीयस्य पद्यस्य सरलार्थं श्रुत्वा प्रदत्तानां प्रश्नानाम् उत्तराणि कथयत**

(क) कस्मैचिद् अपि जनाय किं न दातव्यम् ?

(ख) कस्मिन् काले भोजनं न कर्तव्यम् ?

(ग) अतिभोजनं जनेन कदा न कर्तव्यम् ?

**५. अधः प्रदत्तस्य पद्यस्य नेपालीभाषायाम् अर्थं कथयत**

अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् ।
अपुण्यं लोकविद्विष्टं तस्मात् तत् परिवर्जयेत् ॥

**६. अधस्तनस्य सूक्तस्य वारं वारम् अनुवाचनं कुरुत**

सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

**७. यूयं किं किं खादथ ? तेषां किं पौष्टिकं वर्तते, किं च अपौष्टिकम् अस्ति ? पृथक्कृत्य कथयत ।**

**८. प्रदत्तं पद्यं तद् भावार्थं च श्रुत्वा प्रश्नानाम् उत्तराणि कथयत**

दीपो भक्षयते ध्वान्तं कज्जलं च प्रसूयते ।
यादृशं भक्षयेदन्नं जायते तादृशं मनः ॥

दीपः अन्धकारं खादति, ततः स्वस्मात् कृष्णं कज्जलं च निष्कासयति । अतः

यादृशं भोजनं क्रियते, मनः अपि तादृशम् एव भवति । यः सात्त्विकं भोजनं करोति, तस्य मनः अपि सात्त्विकं भवति । यश्च तामसं भोजनं करोति, तस्य मनः अपि तामसं भवति । यः हिंसया भोजनं करोति, तस्य मनसि हिंसा एव उत्पद्यते ।

बत्ती अन्धकार खान्छ, त्यसपछि आफू कालो गाजल निकाल्दछ । त्यसैले जस्तो भोजन गरिन्छ, मन पनि त्यस्तै बन्छ । जो सात्त्विक भोजन गर्छ, उसको मन पनि सात्त्विक हुन्छ । त्यसैगरी जसले तामस भोजन गर्छ, उसको मन पनि तामस नै बन्छ । जो हिंसाद्वारा भोजन गर्दछ, त्यसको मनमा पनि हिंसा नै उत्पन्न हुन्छ ।

(क) दीपः किं खादति ? किं च निष्कासयति ?

(ख) कस्य मनः सात्त्विकं भवति ?

(ग) यः तामसं भोजनं करोति, तस्य मनः कीदृशं भवति ?

(घ) कीदृशस्य जनस्य मनसि हिंसा उत्पद्यते ?

९. **चित्रे किं किं दृश्यते ? कथयत**



**१०. श्रवणपाठं श्रुत्वा सत्यवाक्ये (✓) चिह्नम् असत्यवाक्ये च (✗) चिह्नं दत्त**

(क) शरीरे आहारस्य महान् प्रभावः भवति । ( )

(ख) अपौष्टिकेन आहारेण शरीरं सन्तुलितं भवति । ( )

(ग) पौष्टिकः आहारः अस्माकं रोगप्रतिरोधकशक्तिं ह्रासयति । ( )

(घ) पौष्टिकेन आहारेण शरीरम् ऊर्जां लभते । ( )

(ङ) अपौष्टिकस्य आहारस्य एव अतिभोजनं निन्दितम् अस्ति । ( )

## पठनम्

**१. पाठस्य पद्यानां सलयं वाचनं कुरुत ।**

**२. अधस्तनानां पदानां शुद्धतया पठनं कुरुत**

अकुत्सयन्, दृष्ट्वा, यच्छति, नाद्याच्चैव, अत्यशनम्, अस्वर्ग्यम्, सत्त्वम्, स्तेनः

**३. प्रदत्तस्य पद्यस्य मौनपठनं विधाय तस्य सरलार्थं नेपालीभाषायां कथयत**

नोच्छिष्टं कस्यचिद् दद्यान्नाद्याच्चैव तथान्तरा ।
न चैवात्यशनं कुर्यान्न चोच्छिष्टः क्वचिद् व्रजेत् ॥

**४. पाठस्य चतुर्थपद्यस्य अन्वयस्य द्रुतपठनं कुरुत ।**

**५. पाठं पठित्वा उत्तरयत**

(क) पाठे कति पद्यानि सन्ति ?

(ख) अत्र प्रतिपद्यम् एकस्यां पङ्क्तौ कति अक्षराणि सन्ति ? प्रथमपङ्क्त्याः उच्चारणे कस्मिन् अक्षरे विरामो भवति ? विचारपूर्वकम् उच्चार्य कथयत ।

(ग) पाठस्थश्लोकेषु अनुष्टुप्छन्दसः प्रयोगः वर्तते । अत्र उच्चारणे यत्र विरामः

भवति, तत्र चरणस्य अन्तः भवति । एवं चेद् अत्र एकस्मिन् पद्ये कति चरणानि भवन्ति ?

(घ) अनुष्टुप्छन्दसः एकस्मिन् चरणे कति अक्षराणि भवन्ति ?

**६. पाठस्य प्रथमं पद्यं तत्सरलार्थं च पठित्वा रिक्तस्थानं पूरयत**

(क) भोजनम् अस्माकं शरीरस्य ......... करोति ।

(ख) भोजनस्य ......... न कर्तव्या ।

(ग) भोजनं दृष्ट्वा जनः ......... भवेत्, ........ भवेत् ।

(घ) जनः ......... प्रशंसां कुर्वन् तस्य ग्रहणं कुर्यात् ।

**७. अधस्तनं श्लोकं पठित्वा तदाधारेण परस्परं मेलयत**

अन्नं ब्रह्मा रसो विष्णुः पक्ता देवो महेश्वरः ।
एवं ज्ञात्वा तु यो भुङ्क्ते अन्नदोषैर्न लिप्यते ॥

| | |
|---|---|
| अन्नम् | विष्णुः |
| रसः | शङ्करः |
| पाचकः | ब्रह्मा |

**८. अधस्तनानि पद्यानि शुद्धतया उच्चारयितुं प्रयतध्वम्, आवश्यके सति शिक्षकस्य साहाय्यं गृह्णीत**

कट्वम्ल-लवणात्युष्ण-तीक्ष्ण-रूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥
आयुस्सत्व-बलारोग्य-सुख-प्रीति-विवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥

९. **अधस्तनं गद्यांशं सस्वरं पठित्वा प्रदत्तानां प्रश्नानाम् उत्तराणि दत्त**

आहारे षट्प्रकारकाः रसाः भवन्ति । ते मधुरः, अम्लः, लवणः, कटुः, तिक्तः, कषायश्चेति सन्ति । भोजने यथाप्रमाणं रसानां ग्रहणं करणीयम् । षड्भिः रसैः युक्तः आहारः प्रशस्यः भवति । तेन स्वास्थ्ये लाभः भवति । वैद्यकशास्त्रानुसारेण आदौ मधुरस्य भोजनं कर्तव्यम्, मध्ये अम्लं लवणं च भक्षणीयम्, अन्ते च कटु-कषाय-तिक्तानां भोजनं कर्तव्यम् । तथैव प्रारम्भे आर्द्रं भोजनं कर्तव्यम्, मध्ये कठोरं भोजनं कर्तव्यम्, अन्ते च पुनः द्रवपदार्थस्य भक्षणं कर्तव्यम् । एवं नियमेन भोजने कृते स्वास्थ्यं समीचीनं भवति ।

आहारमा छ प्रकारका रस हुन्छन् । ती हुन्- गुलियो, अमिलो, नुनिलो, पिरो, तितो र टर्रो । भोजनमा सकेसम्म धेरै रसको ग्रहण गर्नुपर्छ । छ प्रकारकै रसले युक्त आहार उपयुक्त हुन्छ । त्यसबाट स्वास्थ्यमा फाइदा पुग्छ । आयुर्वेद शास्त्रअनुसार सुरुमा गुलियो भोजन गर्नुपर्छ । बिचमा अमिलो र नुनिलो खानुपर्छ र अन्त्यमा पिरो, टर्रो र तितो वस्तु खानुपर्छ । त्यसै गरी सुरुवातमा रसिलो वस्तु खानुपर्छ, बिचमा ठोस पदार्थ खानुपर्छ र अन्त्यमा झोलिलो पदार्थको भोजन गर्नुपर्छ । यसरी नियमपूर्वक भोजन गर्नाले स्वास्थ्य राम्रो बन्दछ ।

(क) आहारे कति रसाः भवन्ति ?

(ख) कीदृशः आहारः प्रशस्यः भवति ?

(ग) भोजनान्ते केषां रसानां भोजनं कार्यम् ?

(घ) भोजनस्य मध्ये कीदृशं भोजनं कर्तव्यम् ?

(ङ) रिक्तस्थानं पूरयत

(अ) भोजने ............ रसानां ग्रहणं करणीयम् ।

(आ) वैद्यकशास्त्रानुसारेण अन्ते ....................... भोजनं कर्तव्यम् ।

(इ) .......... आर्द्रं भोजनं कर्तव्यम् ।

## लेखनम्

**१. अधस्तनानां पदानां स्वपुस्तिकायां पुनर्लेखनं कुरुत**

प्रतिनन्देत्, अशनम्, भुक्तम्, दद्यात्, अत्यशनम्, अनारोग्यम्, अस्वर्ग्यम्, लोकविद्विष्टम्, अभिमन्येत ।

**२. अधस्तनानि पदानि शुद्धानि कृत्वा लिखत**

असनम्, हृस्येत्, पुजितम्, नासयेत्, कश्यचिद्, अनायुश्यम्, भ्रीयेत, यत्छति

**३. अधः प्रदत्तानां पदानाम् अर्थं लिखत**

अकुत्सयन्, उच्छिष्टम्, अद्यात्, क्वचिद्, परिवर्जयेत्

**४. निम्नाङ्कितानां पदानां प्रयोगेण प्रतिपदम् एकैकं वाक्यं लिखत**

दृष्ट्वा, यच्छति, अतिभोजनम्, अधिकम्, स्तेनः ।

**५. प्रदत्तस्य पद्यस्य श्रुतिलेखनं कुरुत**

अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् ।
अपुण्यं लोकविद्विष्टं तस्मात् तत् परिवर्जयेत् ॥४॥

**६. मञ्जूषायाः पदानां प्रयोगेण रिक्तस्थानं पूरयत**

| | | | | | |
|---|---|---|---|---|---|
| तावद् | दण्डनीयः | यावद् | चौरः | उदरपूर्तये | इच्छाम् |

जनेन ............ भोजनं कर्तव्यम् । उदरपूर्तये .......... भोजनम् आवश्यकं भवति ........ एव भोजनं जनेन ग्रहीतव्यम् । ततः अधिकभोजनस्य .......... यः करोति स ........ अस्ति, सः .......... भवति ।

७. **अधस्तनस्य पद्यस्य सरलार्थं विलिखत**

पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ।

दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥

८. **पाठस्य पञ्चमस्य पद्यस्य नेपालीभाषायाम् अर्थं लिखत ।**

९. **अधो लिखितं कथनम् आधृत्य परस्परं मेलयत**

आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ।

स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ॥

आहार पवित्र भयो भने चरित्र असल हुन्छ । चरित्र असल भए स्मरणशक्ति दृढ बन्छ । दृढ स्मरण शक्तिद्वारा ज्ञान प्राप्त गर्नाले सम्पूर्ण बन्धनहरूबाट मुक्ति प्राप्त हुन्छ ।

| | |
|---|---|
| आहारशुद्ध्या | मोक्षः |
| सत्त्वशुद्ध्या | सत्त्वशुद्धिः |
| स्मृतिलाभेन | स्मृतिलाभः |

१०. **अधः प्रदत्तं पद्यं पठित्वा प्रदत्तप्रश्नानां समुचितम् उत्तरं परिचिनुत**

भोजनान्ते पिबेत् तक्रं दिनान्ते तु पिबेत् पयः ।

निशान्ते च पिबेद् वारि त्रिभी रोगो न विद्यते ॥

भोजनको अन्त्यमा मोही पिउनुपर्छ। दिनको समाप्ति अर्थात् सुत्ने बेलामा दुध पिउनुपर्छ। रात्रिको अन्त्य अर्थात् बिहान उठ्नेबित्तिकै पानी पिउनुपर्छ। यी तीन कुरा नियमित गर्नाले शरीरमा रोग उत्पन्न हुँदैन।

(क) भोजनस्य समाप्तौ किं पातव्यम् ?

(अ) तक्रम् (आ) दुग्धम् (इ) जलम्

(ख) दिनस्य समाप्तौ शयनकाले किं पातव्यम् ?

(अ) तक्रम् (आ) दुग्धम् (इ) जलम्

(ग) रात्रेः समाप्तौ प्रातःकाले किं पातव्यम् ?

(अ) तक्रम् (आ) दुग्धम् (इ) जलम्

(घ) यथासमयं तेषां पानैः किं न जायते ?

(अ) हर्षः (आ) सुखम् (इ) रोगः

११. **पाठम् आधृत्य प्रदत्तान् प्रश्नान् उत्तरयत**

(क) जनः कथं भोजनस्य ग्रहणं कुर्यात् ?

(ख) अनादरेण गृहीतं भोजनं किं किं नाशयति ?

(ग) जनेन किं कदापि न कर्तव्यम् ?

(घ) किं जनस्य स्वास्थ्यम् आयुष्यं पुण्यं च नाशयति ?

(ङ) सामाजिकाः जनाः कं निन्दन्ति ?

(च) कः दण्डनीयः भवति ?

१२. **अधस्तनं पद्यं पठित्वा प्रश्नान् उत्तरयत**

अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः।
यज्ञाद् भवति पर्जन्यः यज्ञः कर्मसमुद्भवः॥

अन्नबाट प्राणीहरू उत्पन्न हुन्छन् । बादलबाट अन्न उत्पन्न हुन्छ । यज्ञबाट बादलको उत्पत्ति हुन्छ । यज्ञचाहिँ कर्मबाट उत्पन्न हुन्छ ।

(क) भूतानि कस्माद् जायन्ते ?

(ख) अन्नस्य उत्पत्तिः कुतः भवति ?

(ग) पर्जन्यः कस्माद् भवति ?

(घ) कर्मसमुद्भवः कः ?

**१३. अधस्तनं गद्यं पठित्वा निर्दिष्टकार्याणि कुरुत**

मानवजीवने आहारः सदा आवश्यकः भवति । आहारेण शरीरस्य मनसश्च विकासः भवति । जठराग्निः सदा अस्माकम् आहारं पाचयति । आहारस्य बहवः नियमाः सन्ति । भोजनात् पूर्वं हस्तौ पादौ च प्रक्षालनीयौ । तेन आयुष्यवृद्धिः जायते । सुवर्णस्य पात्रे, पलाशपत्रे, पद्मपत्रे च भोजनं कर्तव्यम्, परम् मृत्तिकायाः पात्रे, लोहपात्रे, ताम्रपात्रे च भोजनं न करणीयं । एतानि पात्राणि शास्त्रैः भोजनाय निषिद्धानि सन्ति । एतेषु पात्रेषु भोजनेन मनुष्यस्य स्वास्थ्यं प्रतिकूलं भवति । पूर्वाभिमुखः उत्तराभिमुखः वा सन् जनः भोजनं कुर्यात् । केशैः नखैः वा दूषितं भोजनं न भोक्तव्यम् । अतिभोजनं तु हानिकरं भवति एव । पात्रे प्रदत्तानि एव व्यञ्जनानि भक्षयेत्, हस्ते हस्तेन वा दत्तानि व्यञ्जनानि न भक्षयेत् । बुभुक्षायां सत्याम् एव भोजनं ग्राह्यम् । बुभुक्षायाः तृप्तिपर्यन्तम् एव भक्ष्यम् । एकाग्रचित्तेन शान्त्या च भोजनं कार्यम् । अपाच्यं गरिष्ठं च भोजनं न भोक्तव्यम् । सामान्यम् एव भोजनं स्वास्थ्यस्य लाभाय भवति । भोजनसमये जलं न पिबेत् । भोजनस्य ३० कलाभ्यः पूर्वं, ५० निमिषेभ्यः पश्चाद् वा जलं पातव्यम् । अत्युष्णं, अतिशीतलं वा भोजनं न ग्राह्यम् । तेन भोजनेन जठराग्निः प्रभावितः भवति । तादृशं भोजनं पाचने अपि दुष्करं भवति । उष्णं भोजनं स्वादिष्टं भवति । उष्णभोजनं पाचने साहाय्यं करोति । भोजनसमये चलचित्रं, दूरदर्शनं वा न पश्येत् । भोजनानन्तरं होरात्रयं यावत् शयनं न

कर्तव्यम् । तेन पाचने सारल्यं भवति । अन्यथा अजीर्णता भवितुं शक्नोति । मनुष्यैः यथाशक्यं मांसाहारः वर्जनीयः । शाकाहारेण शरीरस्य बलं वर्धते । एवं नियमेन भोजने कृते जनः हृष्टः पुष्टश्च भवति ।

मान्छेको जीवनमा आहारको सधैँ आवश्यकता पर्दछ । आहारले शरीर र मनको विकास हुन्छ । जठराग्नि नाम गरेको पेटभित्र रहेको अग्निले हाम्रो आहारलाई पचाउने काम गर्दछ । आहारका धेरै नियमहरू हुन्छन् । भोजनभन्दा अगाडि हात र खुट्टा धुनुपर्दछ । त्यसो गर्नाले स्वास्थ्य राम्रो हुन्छ र आयुको पनि वृद्धि हुन्छ । सुनको भाँडामा, पलाशको पातमा र कमलको पातमा भोजन गर्नु उपयुक्त मानिन्छ तर माटो, फलाम र तामाको भाँडामा भोजन गर्नु हुँदैन । यी भाँडाहरूलाई भोजनका लागि शास्त्रमा निषेध गरिएको छ । यी भाँडाहरूमा भोजन गर्नाले मानिसको स्वास्थ्य प्रतिकूल बन्दछ । उत्तरतिर फर्किएर भोजन गर्नुपर्छ । कपाल वा नङद्वारा दूषित भएको भोजन खानु हुँदैन । धेरै भोजन पनि स्वास्थ्यका लागि हानिकारक हुन्छ । भाँडामा दिएको भोजन मात्र खानुपर्छ । हातले वा हातमा दिएको भोजन ग्रहण गर्नु हुँदैन । भोक शान्त नहोउन्जेल मात्र खानुपर्छ । चित्तलाई एकाग्र पारी शान्तिपूर्वक भोजन गर्नुपर्छ । न पच्ने र गरिष्ठ भोजन खानु हुँदैन । सामान्य भोजन नै स्वास्थ्यको लाभका लागि हुन्छ । भोजनको समयमा पानी पिउनु हुँदैन । भोजन गर्नुभन्दा ३० मिनेटअगाडि र भोजन गरिसकेको ५० मिनेटपछि मात्र पानी पिउनुपर्छ । धेरै तातो र धेरै चिसो भोजन गर्नु हुँदैन । त्यस्तो भोजनले जठराग्नि प्रभावित हुन्छ । त्यस्तो भोजन पचाउनलाई पनि कठिन हुन्छ । ठिक्क तातो भोजन मिठो हुन्छ, त्यस्तो भोजनले पाचनलाई सहयोग पनि गर्दछ । भोजनका समयमा मोबाइल, टिभी आदि पनि हेर्नु हुँदैन । भोजन गरेपछि तीन घण्टासम्म सुत्नु हुँदैन । त्यसबाट पाचन प्रणालीलाई सहयोग पुग्छ । भोजनलगत्तै सुत्नाले भोजन नपच्ने समस्या हुन सक्छ । मानिसले सकेसम्म मांसाहार त्याग्नुपर्दछ । शाकाहारले शरीरको बल बढ्छ । यसरी नियमपूर्वक भोजन गर्नाले मानिस हृष्ट र पुष्ट हुन्छ ।

**(क) एकपदेन उत्तरयत**

(अ) कः अस्माकम् आहारं पाचयति ?

(आ) किं हानिकरं भवति ?

(इ) कीदृशं भोजनं स्वास्थ्यलाभाय भवति ?

(ई) केन शरीरस्य बलं वर्धते ?

**(ख) एकवाक्येन उत्तरयत**

(अ) कस्मिन् कस्मिन् पात्रे भोजनं कर्तव्यम् ?

(आ) कैः दूषितं भोजनं न भोक्तव्यम् ?

(इ) कदा जलं पातव्यम् ?

(ई) कथं जनः हृष्टः पुष्टश्च भवति ?

**(ग) रिक्तस्थानं पूरयत**

(क) भोजनात् पूर्वं हस्तौ पादौ च .......... ।

(ख) वर्ज्यपात्रेषु भोजनेन मनुष्यस्य स्वास्थ्यं ......... भवति ।

(ग) अपाच्यं .......... च भोजनं न भोक्तव्यम् ।

(घ) ......... भोजनं स्वादिष्टं भवति ।

## व्याकरणानुशीलनम्

१. **उदाहरणम् अनुसृत्य प्रदत्तानां पदानां सन्धिविच्छेदं कुरुत**

शिष्टः = शिष् + तः

(क) वृष्टिः (ख) कृष्णः (ग) तृष्णा (घ) पेष्टा

(ङ) घृष्टम् (च) पृष्ठम् (छ) इष्टम्

२. **उदाहरणानुसारेण सन्धिं कुरुत**

रामस् + षष्ठः = रामष्षष्ठः, उद् + डीनः = उड्डीनः,

(क) उद् + डयनम्　　(ख) बालकास् + षट्　　(ग) तत् + टीका

(घ) एतद् + ढौकनम्　　(ङ) हरिस् + टीकते　　(च) उत् + टङ्कनम्

(छ) षण् + नगर्यः

३. **प्रदत्तान् ष्टुत्वसन्धिनियमान् पठित्वा स्वभाषया ष्टुत्वसन्धिनियमान् कथयत**

स् + ष्/ट्/ठ्/ड्/ढ/ण्　　ष्

त् + ष्/ट्/ठ्/ड्/ढ/ण्　　ट्

थ् + ष्/ट्/ठ्/ड्/ढ/ण्　　ठ्

द् + ष्/ट्/ठ्/ड्/ढ/ण्　　ड्

ध् + ष्/ट्/ठ्/ड्/ढ/ण्　　ढ्

न् + ष्/ट्/ठ्/ड्/ढ/ण्　　ण्

४. **प्रदत्तात् पद्यात् ष्टुत्वसन्धिना संहितानि पदानि परिचित्य तेषां सन्धिविच्छेदं कुरुत**

(क) अस्माकं ग्रामे एका बृहड्ढक्का वर्तते ।

(ख) देव्याः धनुष्टङ्कारं श्रुत्वा दैत्याः भीतवन्तः ।

(ग) आकाशे पक्षिणः उड्डीयन्ते ।

(घ) शिवस्य मन्दिरे महाण्डमरुः वर्तते ।

## रचनात्मकः अभ्यासः

१. **पौष्टिकानाम् अपौष्टिकानां च आहाराणां सूचीं निर्माय कक्षायां श्रावयत ।**

२. **युष्माकं गृहे भोजनकाले किं किं क्रियते ? क्रमेण लिखत ।**

३. **सद्भोजनस्य विषये एकं चित्रं निर्मात ।**

## श्रवणपाठः

शरीरे आहारस्य महान् प्रभावः भवति । यथा वयं खादामः तथा अस्माकं स्वास्थ्यं भवति । शरीरं स्वास्थ्येन संरक्षितं भवति । पौष्टिकः आहारः रोगप्रतिरोधकशक्तिं वर्धयति । तेन अस्माकं स्वास्थ्यं सुरक्षितं भवति, शरीरं च सन्तुलितं जायते । अपौष्टिकः आहारः अस्माकं रोगप्रतिरोधकशक्तिं ह्रासयति । तेन अस्माकं स्वास्थ्यं विनश्यति, शरीरं च असन्तुलितं भवति । पौष्टिकेन आहारेण शरीरे ऊर्जा लभ्यते, अपौष्टिकेन आहारेण शरीरस्य ऊर्जा विनश्यते । अतः सदा पौष्टिकः आहारः भक्षणीयः, अपौष्टिकः आहारः न भक्षणीयः । संस्कृते 'अति सर्वत्र वर्जयेत्' इति सूक्तिः वर्तते । पुनः 'अजीर्णे भोजनं विषम्' इति च कथितम् अस्ति । अतः पौष्टिकस्य आहारस्य अपि अतिभोजनं निन्दितम् अस्ति । तदपि स्वास्थ्यस्य हानिकरं वर्तते । तेन हितभोजी मितभोजी च जनः स्वस्थः भवति । स एव शरीरस्य उचितं व्यवस्थापनं करोति ।

# नवमः पाठः

**पाठप्रवेशः**

## अवकाशकार्यम्

(शीतकालस्य अवकाशः समाप्तः अस्ति । अद्य विद्यालयस्य प्रथमः दिवसः वर्तते । हरिबहादुरः, हर्कमाया, रामलखनश्च मार्गे मिलन्ति । ततः तेषां वार्तालापं प्रचलति ।)

**हरिबहादुरः** युवयोः अवकाशः कीदृशः जातः ?

**रामलखनः** अहं गृहे स्थित्वा मातापित्रोः कार्येषु सहयोगम् अकरवम् ।

**हर्कमाया** समीचीनम् । अहं तु अवकाशस्य समये भ्रमणाय अगच्छम् । हरिबहादुर ! त्वं किम् अकरोः ?

**हरिबहादुरः** अहम् उद्यानस्य कार्यम् अकरवम् ।

**रामलखनः** किं त्वम् उद्यानं निर्मितवान् ?

**हरिबहादुरः** आम् । अहं गृहस्य प्राङ्गणे पुष्पाणां विकसनाय उद्यानं निर्मितवान् । युवां मम गृहम् आगच्छताम् । अहं मया निर्मितम् उद्यानं दर्शयामि । साम्प्रतं तु तत्र मधुमक्षिकाः आगच्छन्ति । पिता कथयति, "मधुमक्षिकाः पुष्पेभ्यः रसं निष्कास्य मधु निर्मान्ति । अतः वयं मधुमक्षिकाः पालयामः" ।

**हर्कमाया** तव पितुः विचारः शोभनः वर्तते । तेन अर्थोपार्जनम् अपि भवति । रामलखनः त्वं केषु कार्येषु सहयोगम् अकरोः ?

**रामलखनः** अहं गृहस्य कार्याणि अकरवम्, व्यञ्जनस्य कर्तनम्, वस्त्राणां प्रक्षालनम्, गृहस्थानां वस्तूनां व्यवस्थापनम् च अकरवम् । तथैव यदा कदा

मात्रा सह भोजनम् अपचम् । भगिनीं गृहकार्यम् अशिक्षयम् । मम अवकाशस्य समयः सम्यग् व्यतीतः । तव यात्रायाः विषये अपि वद ।

**हर्कमाया** मम यात्रा मनोरमा अभवत् ।

**हरिबहादुरः** त्वम् एकाकिनी एव अगच्छः ?

**हर्कमाया** न, परिवारेण सह गतवती आसम् । किं युवां मम यात्रायाः वृत्तान्तं शृणुथः ?

**हरिबहादुरः** अवश्यम् ।

**रामलखनः** आवाम् अतीव उत्सुकौ स्वः ।

**हर्कमाया** तर्हि ध्यानेन शृणुतम् ।

(हर्कमाया यात्रावृत्तान्तं श्रावयति ।)

(जाडो बिदा सकिएको छ । आज विद्यालयको पहिलो दिन हो । हरिबहादुर, हर्कमाया र रामलखन बाटामा भेटिन्छन् । त्यसपछि उनीहरूको कुराकानी सुरु हुन्छ ।)

**हरिबहादुर** तिमीहरू दुई जनाको बिदा कस्तो भयो त ?

**रामलखन** मैले घरमा बसेर आमाबुबालाई उहाँहरूका कामहरूमा सहयोग गरेँ ।

**हर्कमाया** राम्रो । म त बिदाको बेला घुम्नका लागि गएँ । हरिबहादुर, तिमीले के गऱ्यौ ?

**हरिबहादुर** मैले बगैँचाको काम गरेँ ।

**रामलखन** के तिमीले बगैँचा बनायौ ?

**हरिबहादुर** अँ । मैले घरको आँगनमा फूलहरू फुलाउनका लागि बगैँचा बनाएँ । तिमीहरू मेरो घरमा आओ । म मैले बनाएको बगैँचा देखाउँछु । अहिले त त्यहाँ मौरीहरू आउँछन् । बुबा भन्नुहुन्छ, "मौरीहरू फूलबाट रस निकालेर मह बनाउँछन् । त्यसैले हामी मौरी पाल्छौँ ।"

**हर्कमाया** तिम्रा बुबाको विचार राम्रो छ । त्यसबाट पैसा कमाइ पनि हुन्छ । रामलखन ! तिमीले कुन काममा सहयोग गऱ्यौ ?

**रामलखन** मैले घरायसी कामहरू गरेँ, तरकारी काट्ने, कपडा धुने र घरका सामानहरूलाई मिलाउने पनि गरेँ । त्यसैगरी कुनै कुनै बेला आमासँग खाना पकाएँ । बहिनीलाई गृहकार्य सिकाएँ । मेरो बिदाको समय राम्ररी बित्यो । तिम्रो यात्राको विषयमा पनि भन ।

**हर्कमाया** मेरो यात्रा रमाइलो भयो ।

**हरिबहादुर** तिमी एक्लै गयौ ?

**हर्कमाया** होइन, परिवारसँग गएकी थिएँ । के तिमीहरू पनि मेरो यात्राको वृत्तान्त सुन्छौ ?

**हरिबहादुर** अवश्य ।

**रामलखन** हामी दुई एकदमै उत्सुक छौँ ।

**हर्कमाया** त्यसो भए ध्यानले सुन ।

(हर्कमाया यात्राको वृत्तान्त सुनाउँछिन् ।)

**मूलपाठः**

# मम चित्रवनस्य यात्रा

आधुनिके समाजे जनाः कार्येषु व्यस्ताः भवन्ति । अतः अवकाशस्य समये यात्रायै तत्पराः भवन्ति । अहम् अपि शीतकालिके अवकाशे यात्रायै अगच्छम् । पूर्वं स्वदेशस्य स्थानानि भ्रमणीयानि इति मम विचारः अस्ति । मम विचारेण परिवारस्य मनः च भ्रमणे आकृष्टम् अभवत् । परिवारे पिता, माता, भ्राता अहं च कृत्वा चत्वारः सदस्याः स्मः । परिवारस्य सर्वे सदस्याः चित्रवनं गन्तुम् उद्यताः अभवन् । तत् श्रुत्वा अहम् अतीव प्रसन्ना अभवम् । माघमासस्य चतुर्थे दिवसे वयं चित्रवनं प्रति प्रस्थितवन्तः ।



अहं भ्रमणस्य दिने ब्राह्मे मुहूर्ते अजागरम् । प्रातःकाले शौचादिकं कृत्वा परिवारेण सह वायुयानेन सिमरानगरं प्राप्नुवम् । ततः वयं बसयानेन चित्रवनं प्रति प्रस्थितवन्तः । पथलैयातः हेटौँडानगरस्य मध्ये अमलेखगञ्जविपणिः आसीत् । मध्ये मध्ये वनम् आसीत् । तस्मिन् एव खण्डे 'चुरियामाई' नाम्न्याः देव्याः मन्दिरम् अपि अवर्तत । केचिद् बसयानाद् अवतीर्य मन्दिरस्य दर्शनार्थं गताः । परन्तु अस्माकं गन्तव्यं चित्रवनस्य सौराहास्थानम् आसीत् । अतः वयं मनसा एव देवीं नमस्कृतवन्तः ।

मार्गे हेटौँडा-मनहरी-लोथर-भण्डारा-पर्सा-टाँडी-इत्यादीनि स्थानानि आसन् । टाँडीनगराद् दक्षिणे सौराहानामकस्थानम् आसीत् । मार्गे वयं सिमरानगरे क्रीतानि वस्तूनि अखादाम । सौराहां प्राप्य अतिथिगृहे एकं प्रकोष्ठं गृहीत्वा वयम् अतिष्ठाम ।

कञ्चित् कालं विश्रम्य वयं 'बुढीराप्ती' इत्याख्यायाः नद्याः तीरम् अगच्छाम । तीरे दीर्घपीठानि आसन् । वयं एकस्मिन् दीर्घपीठे उपविष्टवन्तः । तीरे एकशृङ्गः गण्डकः जलं पिबन् आसीत् । एकशृङ्गः गण्डकः नेपाले एव प्राप्यते इति पिता अकथयत् । मया अपि श्रुतम् आसीत् । प्रत्यक्षं दृष्ट्वा अहं अतीव प्रसन्ना अभवम् । नद्याः पारे घनं वनम् आसीत् । वनस्य मध्ये बिसहजारी इति तडागः वर्तते इति कश्चित् स्थानीयः असूचयत् । सायङ्कालः सन्निकटः आसीत् । सूर्योऽस्तं गच्छन् आसीत् । तद् द्रष्टुं तीरे जनाः आगताः आसन् । केचित् छायाचित्रं गृह्णन्तः आसन् । केचित् च 'टिकटक' इति माध्यमेन साभिनयं दृश्यस्य छायाङ्कनं कुर्वन्तः आसन् । वयम् अपि छायाचित्राणि गृहीतवन्तः ।

चित्रवनस्य आदिवासिनः थारुजातीयाः जनाः सन्ति । तत्र च थारुजातेः सांस्कृतिकः कार्यक्रमः प्रतिदिनम् आयोज्यते इति वयं ज्ञातवन्तः । सायङ्कालानन्तरं वयं तत्र प्राप्नुवन्तः । थारुजातीयानाम् एकं सांस्कृतिकगृहम् आसीत् । तत्र सशुल्कं थारुनृत्यं गानं च वयं अनुभवितुं शक्नुमः । दण्डनृत्यम्, मयूरनृत्यम् इत्यादीनि अनेकानि नृत्यानि वयं दृष्टवन्तः, गीतानि वाद्यवादनानि च श्रुतवन्तः । अन्ते ते अतिथीन् अपि नृत्यार्थं अनुरुद्धवन्तः । वयम् अपि तैः सह नर्तनम् अकुर्म । ततः अतिथिगृहं प्रत्यावर्त्य भोजनं विधाय वयं सुप्तवन्तः ।

अपरस्मिन् दिने चायं पीत्वा स्वल्पाहारं च कृत्वा वयं गजारोहणाय गतवन्तः । गजम् आरुह्य वयं वनम् अभ्रमाम । पक्षिणां कलरवं श्रुत्वा अस्माकं मनांसि आह्लादितानि । तत्र मयूरादीन् विविधान् पक्षिणः, हरिणम्, एकशृङ्गं गण्डकम्, अन्यान् जन्तून् च अपश्याम । वने व्याघ्रनादं श्रुतवन्तः परं दुर्भाग्यवशात् तं द्रष्टुं वयम् अक्षमाः अभवाम । गजकृतं शुण्डेन जलसेचनम् अद्भुतम् आसीत् । गजारोहणे मम प्रथमः अनुभवः आसीत् । भ्राता अपि प्रसन्नः अभवत् । तत्र सङ्ग्रहालयः आसीत् । वयं

तत्र च गतवन्तः । तत्र जीवानां चर्माणि, दन्ताः, अस्थीनि, जीवसम्बद्धानि वस्तूनि च आसन् । तत्र गत्वा अहं बहुविधजीवानां विषये ज्ञातवती । ततः वयम् अतिथिगृहं प्रत्यागतवन्तः ।

प्रातःकालिकं भोजनं कृत्वा वयं गृहं प्रति प्रस्थितवन्तः । मम चित्रवनस्य यात्रा अविस्मरणीया जाता । चित्रवनम् एकं सुन्दरं स्थानम् अस्ति । तत्र विदेशेभ्यः च भ्रमितुं पर्यटकाः आगच्छन्ति । अस्माकं देशे एवं सुरम्याणि स्थानानि बहूनि सन्ति । तेषां स्थानानां प्रचारेण पर्यटनस्य प्रवर्धनं कृत्वा अर्थोपार्जनं कर्तुं शक्यते इति अहं मन्ये ।

अहिलेको समाजमा मानिसहरू काममा व्यस्त हुन्छन् । त्यसैले बिदाको बेला यात्राका लागि तयार हुन्छन् । म पनि जाडो बिदामा यात्राका लागि गएँ । पहिला आफ्नो देशका ठाउँहरू घुम्नुपर्छ भन्ने मेरो विचार छ । मेरो विचारले परिवारको मन पनि भ्रमणप्रति आकर्षित भयो । परिवारमा बुबा, आमा, भाइ र म गरेर चार सदस्य छौँ । परिवारका सबै सदस्यहरू चितवनको सौराहा जान तयार भए । त्यो सुनेर म एकदम खुसी भएँ । माघ महिनाको चौथो दिनमा हामी चितवनतर्फ लाग्यौँ ।

म भ्रमणको दिन ब्रह्ममुहूर्तमा उठेँ । शौचादि सकेर परिवारसँग हवाईजहाजबाट सिमरा पुगेँ । त्यसपछि हामी बसबाट चितवनतर्फ लाग्यौँ । पथलैयादेखि हेटौँडाको बिचमा अमलेखगन्ज बजार थियो । बिच बिचमा वन थियो । त्यही भागमा चुरियामाई नामकी देवीको मन्दिर पनि थियो । केही बसबाट झरेर मन्दिरको दर्शनका लागि गए । तर हाम्रो गन्तव्य चितवन थियो । त्यसैले हामीले मनबाट नै देवीलाई नमस्कार गर्‍यौँ । बाटामा हेटौँडा, मनहरी, लोथर, भण्डारा, पर्सा, टाँडी आदि ठाउँहरू पर्दथे । टाँडीबाट दक्षिणतिर सौराहा थियो । बाटामा हामीले सिमरामा किनेका वस्तुहरू खायौँ । सौराहा पुगेर लजमा एउटा कोठा लिएर हामी बस्यौँ ।

केही समय विश्राम गरेर हामी बुढी राप्ती नदीको किनारमा गयौँ । किनारमा बेन्चहरू थिए । हामी एउटा बेन्चमा बस्यौँ । किनारमा गैँडा पानी पिउँदै थियो । एकसिङे गैँडा नेपालमा मात्र पाइन्छ भन्ने कुरा बुबाले भन्नुभयो । मैले पनि सुनेकी थिएँ । प्रत्यक्ष देखेर म एकदमै खुसी भएँ । नदीको पारिपट्टि बाक्लो वन थियो । वनको बिचमा बिसहजारी ताल छ भनेर कुनै स्थानीयले सूचित गरे । साँझ पर्दै थियो । सूर्य अस्ताउँदै थियो । त्यो हेर्न किनारमा मानिसहरू आएका थिए । केही फोटो खिच्दै थिए । केही चाहिँ टिकटकको माध्यमले अभिनयसहित दृश्यलाई सुरक्षित गर्दै थिए । हामीले पनि फोटो खिच्यौँ ।

चितवनका आदिवासीहरू थारु जातिका मानिसहरू हुन् । त्यहाँ थारु जातिको सांस्कृतिक कार्यक्रम प्रत्येक दिन आयोजना गरिन्छ भन्ने हामीले थाहा पायौँ । साँझपछि हामी त्यहाँ पुग्यौँ । थारु जातिका मानिसहरूको एउटा सांस्कृतिक घर रहेछ । त्यहाँ पैसा तिरेर थारु नाच र गीतको हामी अनुभव लिन सक्छौँ । लाठीनाच, मयूर नाच आदि धेरै नाचहरू हामीले हेऱ्यौँ । गीत र बाजाका धुनहरू सुन्यौँ । अन्तिममा उनीहरूले पाहुनाहरूलाई पनि नाच्नका लागि अनुरोध गरे । हामी पनि तिनीहरूसँगै नाच्यौँ । त्यसपछि लजमा फर्केर खाना खाई सुत्यौँ ।

अर्को दिन चिया खाजा खाएर हामी हात्ती चढ्न गयौँ । हात्ती चढेर वन घुम्यौँ । चराको आवाज सुनेर हाम्रो मन खुसी भयो । त्यहाँ मयूर आदि विभिन्न चरा, हरिण, एकसिङे गैँडा र अन्य जनावरहरू देख्यौँ । वनमा बाघको आवाज सुन्यौँ तर दुर्भाग्यले त्यसलाई देख्न सकेनौँ । हात्तीको सुँडले पानी फ्याँकेको दृश्य अद्भुत थियो । हात्ती चढेको मेरो पहिलो अनुभव थियो । भाइ पनि खुसी भए । त्यहाँ हात्ती चढ्ने ठाउँको नजिकै एउटा सङ्ग्रहालय थियो । हामी त्यहाँ पनि गयौँ । त्यहाँ जीवजन्तुका छाला, दाँत, हाड र जीवसँग सम्बन्धित सामानहरू थिए । त्यहाँ गएर मैले धेरै जीवहरूका बारेमा थाहा पाएँ । त्यसपछि हामी लज फर्क्यौँ ।

बिहानको खाना खाएर हामी घरतर्फ लाग्यौँ । मेरो चितवनको यात्रा अविस्मरणीय रह्यो । चितवन एउटा सुन्दर ठाउँ हो । त्यहाँ विदेशबाट पनि घुम्न पर्यटकहरू आउँछन् । हाम्रो देशमा यस्ता रमाइला ठाउँहरू धेरै छन् । ती स्थानको प्रचारद्वारा पर्यटन प्रवर्धन गरी पैसा कमाउन सकिन्छ भन्ने मलाई लाग्यो ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| वार्तालापः | संवादः | कुराकानी | Conversation |
| पितरौ | माता च पिता च | आमाबुबा | Parents |
| उद्यानम् | वाटिका | बगैँचा | Garden |
| साम्प्रतम् | अधुना | अहिले | Now |
| शोभनः | समीचीनः | राम्रो | Beautiful |
| अर्थोपार्जनम् | द्रव्यार्जनम् | पैसा कमाउनु | Generating income |
| मनोरमा | मनोरञ्जिका | रमाइलो | Entertaining |
| वृत्तान्तः | वर्णनम् | वृत्तान्त | Description |
| अवश्यम् | निश्चयेन | अवश्य | Sure, Certain |
| सदस्याः | सदसि साधवः | सदस्य | Member |
| प्रस्थितवन्तः | प्रस्थानं कृतवन्तः | प्रस्थान गरे | Headed |
| बसयानेन | बसवाहनेन | बसबाट | By bus |
| मध्ये | मध्यभागे | बिचमा | In the middle of |
| मार्गे | वर्त्मनि | बाटामा | On the way |
| अतिथिगृहे | अभ्यागतभवने | लजमा | In Lodge |
| एकशृङ्गः गण्डकः | एकशृङ्गधारी खड्गी | एकसिङ्गे गैँडा | One hored Rhino |
| तडागः | सरोवरः | तलाउ | Lake |
| साभिनयम् | अभिनयपूर्वकम् | अभिनयसहित | Through act |
| सांस्कृतिकम् | संस्कृतिसम्बद्धम् | सांस्कृतिक | Cultural |
| दुर्भाग्यवशात् | दुर्भाग्यस्य कारणेन | दुर्भाग्यले | Unluckily |
| सङ्ग्रहालयः | सङ्कलनगृहम् | सङ्ग्रहालय | Museum |
| पर्यटकाः | भ्रमणकर्तारः | पर्यटक | Tourists |

# अभ्यासः

## श्रवणं भाषणं च

**१. शिक्षकमुखात् श्रुत्वा पदानि अनूच्चारयत**

शीतकालस्य, समीचीनम्, प्राङ्गणे, मधुमक्षिकाः, निष्कास्य, एकाकिनी, भ्रमणीयानि, आकृष्टम्, प्रस्थितवन्तः, क्रीतानि, उपविष्टवन्तः, असूचयत्, सशुल्कम्, वाद्यवादनानि, आरुह्य, सङ्ग्रहालयः, अविस्मरणीया, आह्वयामि ।

**२. पाठप्रवेशस्य संवादं शिक्षकमुखात् श्रुत्वा तथैव अनुवाचयत ।**

**३. मित्रमुखात् संवादं श्रुत्वा उकारान्तनपुंसकलिङ्गस्य शब्दम् अन्विषत ।**

**४. प्रदत्तस्य चित्रस्य नेपालीभाषायां वर्णनं श्रावयत**



**५. अधस्तनानां पदानां मध्ये यथेच्छं प्रयुज्य एकैकं वाक्यं कक्षायां श्रावयत**

कृत्वा, श्रुत्वा, अवतीर्य, प्राप्य, विश्रम्य, दृष्ट्वा, प्रत्यावर्त्य, विधाय, खादित्वा, आरुह्य ।

६. **वाक्यानि श्रुत्वा पाठाधारेण समीचीनम्, असमीचीनं वा कथयत**

(क) हर्कमायायाः परिवारे चत्वारः सदस्याः आसन् ।

(ख) हर्कमाया अपि दर्शनार्थं चुरियामाईमन्दिरम् अगच्छत् ।

(ग) सौराहा इति स्थानं टाँडीनगराद् उत्तरदिशि अस्ति ।

(घ) चित्रवने बिसहजारी इति तडागः वर्तते ।

(ङ) सौराहास्थाने सङ्ग्रहालयः नास्ति ।

७. **सिमरानगराद् सौराहापर्यन्तं कानि स्थानानि सन्ति ? पाठं श्रुत्वा क्रमानुसारेण कथयत ।**

८. **प्रदत्तं श्लोकं श्रुत्वा सखिभिः सह पम्पासरोवरस्य वर्णनं कुरुत**

सौमित्रे शोभते पम्पा वैदूर्यविमलोदका ।
फुल्लपद्मोत्पलवती शोभिता विविधैर्द्रुमैः ॥

लक्ष्मण ! वैदूर्यमणि जस्तै कञ्चन पानी र फुलेका कमलले भरिएको अनेक प्रकारका रुखहरूले वरिपरिबाट ढाकिएको पम्पा नामको तलाउ कति सुन्दर छ, हेर त !

९. **श्रवणपाठस्य श्रवणेन परस्परं मेलयित्वा अभ्यासपुस्तिकायां वाक्यानि लिखत**

| | |
|---|---|
| राधिकायाः | निकटे रारातडागः अस्ति । |
| पितामहः | ग्रामः मुगुमण्डले अस्ति । |
| ग्रामस्य | जनानां चेतांसि आह्लादयति । |
| रारातडागस्य | भ्रमणाय पर्यटकाः आगच्छन्ति । |
| रारातडागस्य सौन्दर्यम् | ग्रामे वसति । |

## पठनम्

**१. पाठस्य आदौ प्रदत्तं संवादं पठित्वा परस्परं मेलयत**

**हरिबहादुरः** अहं गृहे स्थित्वा मातापित्रोः तयोः कार्येषु सहयोगम् अकरवम् ।

**हर्कमाया** अहम् उद्यानस्य कार्यम् अकरवम् ।

**रामलखनः** मम यात्रा मनोरमा अभवत् ।

**हरिबहादुरः** तर्हि ध्यानेन शृणुताम् ।

**हर्कमाया** आवाम् अतीव उत्सुकौ स्वः ।

**रामलखनः** वयं मधुमक्षिकाः पालयामः ।

**२. अधस्तनानि वाक्यानि पठित्वा शिक्षकं श्रावयत**

(क) पूर्वं स्वदेशस्य स्थानानि भ्रमणीयानि इति मम विचारोऽस्ति ।

(ख) अहं भ्रमणस्य दिने ब्राह्मे मुहूर्ते अजागरम् ।

(ग) वयं मनसा एव देवीं नमस्कृतवन्तः ।

(घ) एकशृङ्गः गण्डकः नेपाले एव प्राप्यते इति पिता अकथयत् ।

(ङ) दण्डनृत्यम्, मयूरनृत्यम् इत्यादीनि अनेकानि नृत्यानि वयं दृष्टवन्तः ।

(च) तत्र सङ्ग्रहालयः आसीत् ।

**३. यात्रावर्णनस्य तृतीयम् अनुच्छेदं निरवच्छिन्नतया पठत ।**

**४. अधस्तनं पद्यं सलयं पठित्वा पितुर्गुणानां विषये विमृशत**

प्रजानां विनयाधानाद् रक्षणाद् भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥

प्रजाहरूलाई सदाचार सिकाएकाले, रक्षा गरेकाले र पालनपोषण गरेकाले उनी (दिलीप) नै प्रजाहरूका पिता थिए । उनीहरूका पिता त केवल जन्मका कारण थिए ।

## ५. प्रदत्तम् अनुच्छेदं प्रथमं सस्वरं तदनु मौनं पठित्वा प्रश्नान् उत्तरयत

प्रायशः मनुष्याः मनोरञ्जनाय यात्रां कुर्वन्ति । केचन अनुसन्धानाय यात्रां कुर्वन्ति । केचिच्च तत्रत्यां सामाजिकीं, सांस्कृतिकीं, ऐतिहासिकीं च स्थितिं ज्ञातुं यात्रायां गच्छन्ति । यात्रा चिन्तां निराकरोति । यात्रा मनः सन्तोषयति । यात्रिणः यात्रातः पूर्वं योजनां निर्मान्ति । यात्रायै आवश्यकानि वस्तूनि क्रीणन्ति । तत्पश्चाद् एव गृहाद् यात्रार्थं निष्क्रमन्ति । सम्प्रति पदयात्रायै न केवलं युवकाः अपि तु वृद्धाश्च सन्नद्धाः भवन्ति । प्रतिवर्षं पदयात्रायै नेपाले विदेशेभ्यः अधिकाः पर्यटकाः आगच्छन्ति । तेषां सङ्ख्या प्रतिदिनं वर्धमाना दृश्यते । नेपालस्य प्रकृतिः सुरम्या अस्ति । नेपालस्य उत्तरत्र हिमालयाः, मध्यभागे पर्वताः, दक्षिणभागे च अन्नभाण्डागाररूपेण परिचिताः समतलभूभागाः सन्ति । हरितानि वनानि, रमणीयाः तडागाः, विमलजलयुक्ताः नद्यः सर्वेषां मनांसि हरन्ति । अतः वयम् अपि स्वदेशस्य रम्येषु स्थानेषु यात्रायै गच्छाम ।

### (अ) एकपदेन उत्तरं लिखत

(क) यात्रा किं निराकरोति ?

(ख) यात्रिणः यात्रातः पूर्वं किं निर्मान्ति ?

(ग) नेपालस्य प्रकृतिः कीदृशी अस्ति ?

(घ) नेपालस्य उत्तरत्र के सन्ति ?

**(आ) पूर्णवाक्येन उत्तरं लिखत**

(क) मनुष्याः किमर्थं यात्रां कुर्वन्ति ?

(ख) यात्रा किं किं करोति ?

(ग) सम्प्रति यात्रायै के के सन्नद्धाः भवन्ति ?

(घ) के मनांसि हरन्ति ?

(ङ) प्रतिवर्षं पदयात्रायै नेपाले के आगच्छन्ति ?

प्रायः मानिस रमाइलोका लागि यात्रा गर्दछन् । कोही खोज गर्नका लागि यात्रा गर्दछन् । कोही चाहिँ त्यहाँको सामाजिक, सांस्कृतिक र ऐतिहासिक अवस्था जान्न यात्रामा जान्छन् । यात्राले चिन्ता हटाउँछ । यात्राले मनलाई खुसी पार्छ । यात्रीहरू यात्राभन्दा पहिला योजना बनाउँछन् । यात्राका लागि आवश्यक सामान किन्छन् । त्यसपछि घरबाट यात्राका लागि निस्कन्छन् । अहिले पदयात्राका लागि युवाहरू मात्र होइन वृद्धावस्थामा पुगेकाहरू पनि तयार हुन्छन् । प्रत्येक वर्ष पदयात्राका लागि नेपालमा विदेशहरूबाट धेरै पर्यटकहरू आउँछन् । तिनीहरूको सङ्ख्या दिनदिनै बढेको देखिन्छ । नेपालको प्रकृति सुन्दर छ । नेपालको उत्तरतर्फ हिमालहरू, बिचमा पहाडहरू र दक्षिणमा अन्नभण्डारका रूपमा परिचित सम्म परेका स्थानहरू छन् । हरिया वनहरू, रमाइला तलाउहरू र कञ्चन पानी बग्ने नदीहरूले सबैलाई आकर्षित गर्छन् । त्यसैले हामी पनि आफ्नो देशका रमाइला ठाउँहरूमा यात्राका लागि जाऔँ ।

**६. श्लोकं पठित्वा अधस्तनकार्यकलापौ कुरुत**

अधमा धनमिच्छन्ति धनं मानं च मध्यमाः ।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥

(अ) **प्रश्नान् उत्तरयत**

(क) अधमाः किम् इच्छन्ति ?

(ख) धनं मानं च के इच्छन्ति ?

(ग) के मानम् इच्छन्ति ?

(घ) महतां धनं किम् अस्ति ?

**(आ मानस्य महत्त्वविषये पञ्च वाक्यानि लिखत ।**

अधम मानिसहरू धन चाहन्छन् । मध्यम किसिमका मानिसहरू धन र मान चाहन्छन् । उत्तम किसिमका मानिसहरू सम्मान चाहन्छन् । महान् मानिसहरू सम्मानलाई धन ठान्दछन् ।

७. **तृतीयम् अनुच्छेदं पठित्वा अव्ययपदानि सङ्कलयत ।**

## लेखनम्

१. **पाठस्य चतुर्थानुच्छेदस्य अनुलेखनं कुरुत ।**

२. **पुस्तकं शब्दकोशं शिक्षकसहयोगं वा अवलम्ब्य शब्दानाम् अर्थं नेपालीभाषायां लिखत**

अवकाशः, चित्रवनम्, विपणिः, तीरम्, दीर्घपीठम्, घनम्, नर्तनम्, गजारोहणम्, कलरवः, चर्म, अविस्मरणीया ।

३. **अधस्तनपदानां स्वशब्दैः वाक्येषु प्रयोगं दर्शयत**

सुरम्या, माघमासस्य, उदतिष्ठम्, आदिवासिनः, दण्डनृत्यम्, एकशृङ्गम्, सङ्ग्रहालयः, अर्थोपार्जनम् ।

**४. प्रदत्तस्य श्लोकस्य आधारेण सन्मित्रस्य सङ्गतेः महत्त्वं प्रकाशयत**

चन्दनं शीतलं लोके चन्दनादपि चन्द्रमाः ।

चन्द्रचन्दनयोर्मध्ये शीतला साधुसङ्गतिः ॥

संसारमा चन्दनलाई शीतल मानिन्छ । चन्दनभन्दा पनि शीतल चन्द्रमालाई मानिन्छ । चन्द्रमा र चन्दनभन्दा पनि शीतल असल सङ्गत हो ।

**५. अशुद्धीः संशोध्य लिखत**

आधुनीके, शुत्वा, मुहुर्ते, गृहित्वा, तिरम्, प्रतेक्षम्, द्रश्टुम्, बाद्यवादनम्, प्रशन्नः, अविस्मरणिया, प्रबर्धनम् ।

**६. पाठाधारेण समुचितं विकल्पं संस्थाप्य रिक्तस्थानं पूरयत**

(क) परिवारे .................. सदस्याः आसन् । (चत्वारः, पञ्च)

(ख) वयं .................. प्रस्थितवन्तः । (कारयानेन, बसयानेन)

(ग) तीरे .................. आसन् । (दीर्घपृष्ठानि, गृहाणि)

(घ) एकशृङ्गः गण्डकः .................. एव प्राप्यते । (नेपाले, विदेशेषु)

(ङ) वनस्य मध्ये.................. तडागः वर्तते । (बिसहजारी, तिसहजारी)

(च) ................. पर्यटकाः आगच्छन्ति । (पठितुम्, भ्रमितुम्)

**७. 'यात्रा मनोहरा' इति विषये पाठाधारेण पञ्च वाक्यानि लिखत ।**

**८. पाठम् आधृत्य प्रश्नान् उत्तरयत**

(क) हर्कमायायाः विचारः कः ?

(ख) कदा हर्कमायायाः परिवारः चित्रवनं प्रति प्रस्थितवान् ?

(ग) मार्गे कानि स्थानानि आसन् ?

(घ) हर्कमायायाः परिवारः विश्रम्य कुत्र अगच्छत् ?

(ङ) तीरे एकशृङ्गः गण्डकः किं कुर्वन् आसीत् ?

(च) कश्चित् स्थानीयः किम् असूचयत् ?

(छ) हर्कमाया सौराहायां किं किं दृष्टवती ?

(ज) वने हर्कमाया किम् अपश्यत् ?

(झ) सङ्ग्रहालये कानि वस्तूनि आसन् ?

(ञ) कथम् अर्थोपार्जनं कर्तुं शक्यते ?

## व्याकरणानुशीलनम्

१. **प्रदत्तां शब्दरूपावलिं पठित्वा अभ्यासपुस्तिकायाम् अनुलिखत**

**मधु**-शब्दस्य रूपाणि-

| **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** | **विभक्तिः** |
|---|---|---|---|
| मधु | मधुनी | मधूनि | - **प्रथमा** |
| मधु | मधुनी | मधूनि | - **द्वितीया** |
| मधुना | मधुभ्याम् | मधुभिः | - **तृतीया** |
| मधुने | मधुभ्याम् | मधुभ्यः | - **चतुर्थी** |
| मधुनः | मधुभ्याम् | मधुभ्यः | - **पञ्चमी** |
| मधुनः | मधुनोः | मधूनाम् | - **षष्ठी** |
| मधुनि | मधुनोः | मधुषु | - **सप्तमी** |
| हे मधु/हे मधो | हे मधुनी | हे मधूनि | - **सम्बोधनम्** |

२. **उपरितनायाः रूपावल्याः साहाय्येन वस्तु-शब्दस्य रूपावलीं पूरयत**

**वस्तु**-शब्दस्य रूपाणि-

| **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** | **विभक्तिः** |
|---|---|---|---|
| वस्तु | ........... | ........... | – **प्रथमा** |
| ........... | वस्तुनी | ........... | – **द्वितीया** |
| ........... | ........... | वस्तुभिः | – **तृतीया** |
| वस्तुने | ........... | ........... | – **चतुर्थी** |
| ........... | वस्तुभ्याम् | ........... | – **पञ्चमी** |
| ........... | ........... | वस्तूनाम् | – **षष्ठी** |
| वस्तुनि | ........... | ........... | – **सप्तमी** |
| ........... | हे वस्तुनी | ........... | – **सम्बोधनम्** |

३. **अधो लिखितानां शब्दानां मधु-शब्दवत् रूपाणि लिखत**

(क) श्मश्रु (ख) जानु

(ग) अश्रु

४. **शिक्षकाद् यथावश्यकं साहाय्यम् अवाप्य परस्परं मेलयत**

| | |
|---|---|
| मम नयनम् | व्रणः सञ्जातः । |
| तव जानुनि | संरक्षणं सा एव करोति । |
| हर्षितायाः वस्तुनः | अश्रुणा पूरितम् अस्ति । |
| शैत्यं पराजेतुं | पीडा अस्ति । |
| पुत्रस्य जत्रुणि | दारूणि आनय । |

## ५. निर्देशानुसारं रूपाणि निर्माय रिक्तस्थानं पूरयत

(क) भगिनी दुःखेन ............... पातयति । (अश्रु, द्वितीया विभक्तिः, बहुवचनम्)

(ख) अहं शीतकाले ............ पिबामि । (मधु, द्वितीया विभक्तिः, एकवचनम्)

(ग) गृहस्थानां ................ व्यवस्थापनम् कर्तव्यम् । (वस्तु, षष्ठी विभक्तिः, बहुवचनम्)

(घ) मम भ्रष्टाचारेण अर्जितेषु ............ रुचिर्नास्ति । (वसु, सप्तमी, बहुवचनम्)

(ङ) पत्रयोः कृते ........... आवश्यकता अस्ति । (जतु, षष्ठी विभक्तिः, द्विवचनम्)

## ६. उदाहरणम् अनुसृत्य सन्धिं कुरुत

यथा- बालकः+अस्ति - बालक उ+अस्ति - बालको+अस्ति - बालकोऽस्ति ।

इतः + अपि - इत उ + अपि - इतो + अपि - इतोऽपि ।

आगतः + अत्र - ...................... - ..................... - आगतोऽत्र ।

गतः + अवसरः - .................... - .................... - ................... ।

.................. - .................... - .................... - छात्रोऽनुधावति ।

समयः + अस्ति - ................... - ..................... - ................... ।

.................... - ................... - .................... - तडागोऽयम् ।

**यथा–** गणेशः + वन्दनीयः - गणेश उ + वन्दनीयः - गणेशो वन्दनीयः ।

आगतः + हरिः - आगत उ + हरिः - आगतो हरिः ।

नमः + नमः - ..................... - नमो नमः ।

कालः + यातः - ..................... - ..................... ।

..................... - ..................... - पवनो गतः ।

जातः + घर्मः - ..................... - .................. ।

.................. - ..................... - रमेशो हसति ।

| उत्व-सन्धिनियमः | | |
|---|---|---|
| **अवस्था** | **परिवर्तनम्** | **उदाहरणम्** |
| अः + अवर्णः | विसर्गस्य स्थाने उ, अनन्तरं गुणसन्धिः (अ + उ = ओ), पूर्वरूपसन्धिश्च (ओऽ) | कुतः + अत्र = कुतोऽत्र<br>सागरः + अगच्छत् = सागरोऽगच्छत् |
| अः + हश्प्रत्याहारः (ह, य, र, ल, व, वर्गस्य तृतीयाः वर्णाः (ग, ज, ड, द, ब), चतुर्थाः वर्णाः (घ, झ, ढ, ध, भ) पञ्चमाः वर्णाः (ङ, ञ, ण, न, म) | विसर्गस्य स्थाने उ, अनन्तरं गुणसन्धिः (अ + उ = ओ) | स्तुत्यः + वायुः = स्तुत्यो वायुः<br>रामः + ददाति = रामो ददाति |

**७. सन्धिं सन्धिविच्छेदं वा कुरुत**

बालः + अवसत् = .................. युवकोऽशिक्षितः = ......... + ..........

विद्यालयः + अस्ति = ............... शावकोऽपि = .............. + ...........

कुमारः + बहिः = .................. सैनिको रक्षति= ............ + ...........

युक्तः + लग्नः = ................... वानरो धावति = ........... + ...........

**८. पाठाद् उत्व–सन्धियुक्तानि पदानि अन्विष्य तेषां विग्रहं प्रदर्शयत ।**

## रचनात्मकः अभ्यासः

**१. प्रदत्तं पद्यं गद्ये परिवर्त्य रामस्य जीवनयात्रायाः विषये एकम् अनुच्छेदं रचयत**

आदौ रामतपोवनादिगमनं हत्वा मृगं काञ्चनम्
वैदेहीहरणं जटायुमरणं सुग्रीवसम्भाषणम् ।
बालीनिर्दलनं समुद्रतरणं लङ्कापुरीदाहनम्
पश्चाद् रावणकुम्भकर्णहननमेतद्धि रामायणम् ॥

सुरुमा राम वनवास जान्छन् । सुनको मृगलाई मार्छन् । रावणले सीताको अपहरण गर्छ । जटायुको मृत्यु हुन्छ । रामको सुग्रीवसँग भेट र कुराकानी हुन्छ । बालीको घमन्ड चकनाचुर हुन्छ । हनुमान् समुद्र तर्छन् । लङ्का सहरलाई डढाउँछन् । पछि रामले रावण र कुम्भकर्णलाई मार्छन् । यही नै रामायण हो अर्थात् सङ्क्षिप्त रूपमा रामायण यति नै हो ।

**२. आत्मना विहितायाः कस्याश्चन यात्रायाः वर्णनं कृत्वा लिखत ।**

३. **सर्वे विद्यार्थिनः मिलित्वा स्वविहितायाः यात्रायाः स्थानानि सङ्कलय्य स्थूलाक्षरेण कर्गजपट्टे लिखित्वा कक्षाप्रकोष्ठे स्थापयत ।**

## श्रवणपाठः

राधिका दीपावल्यां ग्रामम् अगच्छत् । तस्याः ग्रामो मुगुमण्डले अस्ति । काष्ठमण्डपाद् बसयानेन तत्र प्राप्तुं दिनद्वयस्य आवश्यकता भवति । वायुयानेन तु घण्टाद्वयेन एव तत्र गन्तुं शक्यते । सा परिवारेण सह तत्र अगच्छत् । मुगुमण्डले तस्याः पितामहः पितामही च वसतः । तौ राधिकां दृष्ट्वा प्रसन्नौ भवतः । तस्याः ग्रामस्य निकटे एव रारातडागो वर्तते । रारा नेपालस्य विशालतमः तडागो वर्तते । स च राराराष्ट्रियनिकुञ्जस्य भागः अस्ति । अस्य तडागस्य नाम्ना एव निकुञ्जस्य अपि नामकरणं विहितम् । तडागं द्रष्टुं स्वदेशाद् विदेशेभ्यः च पर्यटकाः आगच्छन्ति । तडागस्य सौन्दर्यं सर्वेषां चेतांसि आह्लादयति । तत्र तडागस्य अवलोकनाय दर्शनस्तम्भः अपि निर्मितः अस्ति । अर्धघण्टात्मिकया पदयात्रया तत्र प्राप्तुं शक्यते ।

**पाठप्रवेशः**

# बलवान् समयः



मानवजीवनस्य सर्वाधिकेषु महत्त्वपूर्णेषु वस्तुषु समयोऽपि अन्यतमः मन्यते । समयः निरन्तरं निर्बाधं च प्रचलति । प्रत्येकं मानवस्य जीवने समयः कम् अपि अवसरं गृहीत्वा आगच्छति । यः समयं विचार्य स्वकर्तव्यं सम्पादयति, स एव जीवने सफलः भवति । व्यतीते समये किमपि कर्तुं न शक्यते । अतः समाजे एका उक्तिः वर्तते - 'समयस्य शृङ्गं वर्तते पुच्छं नास्ति' इति । एतया उक्त्या यथासमयं कर्म कर्तव्यम् इति वयं जानीमः ।

अस्माभिः समयपालनस्य महत्त्वं प्रकृत्याः बोद्धव्यम् । समयपालने सूर्यः सदा प्रतिबद्धः अस्ति । स प्रतिदिनं प्रातः सायं च यथाकालं समुदेति अस्तं च गच्छति । वृक्षाः

यथाकालं फुल्लन्ति फलन्ति च । समयस्य अपव्ययः क्रियते चेत् कदाचित् समयः अपि अस्मान् नाशयति । समयस्य समुचितात् प्रयोगात् सर्वा अपि मनःकामना पूर्णा भवति । एतस्य अनुसरणं परिपालनं साधु प्रयोगं च कुर्वाणाः जनाः साफल्यं प्राप्नुवन्ति । समयः महद् धनं मन्यते । समयः बलवान् द्रुतगामी च अस्ति । वयं 'समयः याति' इति वदामः । तत् सत्यं नास्ति । समयः न याति वयम् एव यामः । नीतिकारः सत्यं वदति, "कालो न यातो वयमेव याताः" इति । समयस्य अपव्ययेन पीडा असफलता पश्चात्तापः च प्राप्यते । अतः वयं निष्प्रयोजनविषये समयस्य अपव्ययं न कुर्याम ।

मानव जीवनको सबैभन्दा महत्त्वपूर्ण वस्तुहरूमध्ये समय पनि एक हो । समय निरन्तर र निर्बाध चलिरहन्छ । प्रत्येक मानिसको जीवनमा समय कुनै न कुनै अवसर लिएर आउँछ । जसले समयलाई विचार गर्दै आफ्नो कर्तव्य पालन गर्दछ, त्यो व्यक्ति नै जीवनमा सफल बन्दछ । समय बितेपछि केही गर्न सकिँदैन । त्यसैले समाजमा एउटा उखान प्रचलित छ, 'समयको सिङ छ पुच्छर छैन ।' यस उखानले हामीलाई समयमा नै काम गर्नुपर्छ भनेर शिक्षा दिएको छ ।

हामी समयको महत्त्व प्रकृतिबाट बुझ्न सक्छौँ । समयको पालना गर्न सूर्य सधैँ प्रतिबद्ध छ । ऊ प्रतिदिन उचित समयमा बिहानै उदाउँछ र साँझमा अस्ताउँछ । रुखहरू समयमा नै फुल्छन् र फल्छन् । समयलाई खेर फालियो भने कुनै बेला त्यसले पनि हामीलाई नष्ट गराउन सक्छ । समयको उचित प्रयोग गर्ने हो भने हाम्रो सम्पूर्ण इच्छा पूर्ण हुन्छ । समयको अनुसरण, परिपालन र राम्रो प्रयोग गर्ने मानिसहरूले जीवनमा सफलता प्राप्त गर्दछन् । समय नै महान् सम्पत्ति हो । यो बलवान् र शीघ्रगामी हुन्छ । हामी 'समय गयो' भन्छौँ । त्यो सत्य होइन किनकि समय गएको होइन, हामी नै गएका हौँ । त्यसैले 'कालो न यातो वयमेव याताः' भनी नीतिकारले बताएका छन् । समयलाई खेर फाल्दा पीडा, असफलता र पश्चात्ताप मात्र प्राप्त हुन्छ । त्यसैले हामी बेकामका विषयमा समय खेर नफालौँ ।

**मूलपाठः**

# समयस्य परिपालनम्

रावणः सीतायाः अपहरणम् अकरोत् । अतः तेन सह लक्ष्मणसहितस्य रामचन्द्रस्य महान् सङ्ग्रामः अभवत् । तस्मिन् सङ्ग्रामे रामस्य बाणेन रावणः आहतः सञ्जातः । रावणस्य पराजयः अभवत् । मृत्यून्मुखः इदानीं स युद्धभूमौ एव निपतितः वर्तते । रामचन्द्रस्य शिविरे सर्वत्र विजयस्य उल्लासः व्याप्तः अस्ति । हनुमान् वानरसैन्यमध्ये अवस्थाय गायन् दृश्यते । नलः नीलः अङ्गदः च वानरसैन्यैः सह नृत्यन्तः सन्ति । किञ्चिद् दूरं जाम्ववता सह पाषाणस्य आसने विभीषणः स्थितः वर्तते । मलिनमुखस्य तस्य नेत्रयोः अश्रुविन्दवः दृश्यन्ते । रावणस्य मृत्यून्मुखतां विलोक्य लक्ष्मणः नितराम् मोदमानः वर्तते । भ्रातुः रामस्य मुखे तावन् हर्षः नास्ति ।

**लक्ष्मणः** पश्यतु भ्रातः, अस्माकं महान् शत्रुः रावणः आहतः वर्तते । भूमौ निपतितः सः म्रियमाणोऽस्ति । वयं युद्धे विजेतारोऽभवाम । इतः परम् अस्माकं प्रजावती रावणबन्धनात् मुक्तिं प्राप्स्यति । अस्माकं कृते एष महतः हर्षस्य अवसरः वर्तते । किन्तु विचित्रं मन्ये, अहं भवतः मुखमण्डले विजयभावं हर्षभावं च न पश्यामि ।

**रामचन्द्रः** नहि नहि अनुज, अहम् अपि प्रसन्नः एव अस्मि ।

**लक्ष्मणः** किन्तु भवतः मुखमण्डले इदानीम् अपि मलिनता प्रतिभाति । भ्रातः, एतस्याः कारणं किम् ?

**रामचन्द्रः** लक्ष्मण, रावणोऽहङ्कारी व्यभिचारी बलेन उन्मत्तः च आसीत् । एषः न्यायस्य, धर्मस्य सत्यस्य च सदा मानमर्दनम् एव अकरोत् ।

**लक्ष्मणः** (भ्रातुः वचनं श्रुत्वा क्रोधेन रक्तिमे नेत्रे च विधाय) इत्येव न, असौ सदा नारीणाम् अस्तित्वं धूलिसात् अकरोत् । जनकनन्दिनीं छलेन अपहृतवान् । नारीसत्तायाः च तृणवद् उपेक्षाम् अकरोत् । एतादृशस्य दुष्टात्मनः मृत्यौ सर्वैः प्रसन्नैः भाव्यम् ।

**रामचन्द्रः** आम्, एतादृशस्य दुरात्मनः मृत्युः एव वरम् । अतः (परितः वानरसैन्यं दर्शयित्वा) अत्र सत्यस्य पक्षपातिनः सर्वे मम हितैषिणः इदानीं प्रसन्नाः सन्ति । अहम् अपि प्रसन्नः एव अस्मि ।

**लक्ष्मणः** (निर्निमेषम् अग्रजं विलोक्य) भवतः मनसि काचन वार्ता निगूढा अस्ति किल । भ्रातः ! का वार्ता भवन्तं पीडयन्ती अस्ति ? मां कथयतु ।

**रामचन्द्रः** रावणस्य निकटस्थेन मृत्युना अहं सुखी एव न, दुःखी अपि अस्मि, लक्ष्मण !

**लक्ष्मणः** (साश्चर्यम्) रावणस्य निकटस्थेन मृत्युना भवान् दुःखी ? परन्तु किमर्थम् ?

**रामचन्द्रः** भ्रातः ! रावणः अभिमानी निर्दयी दुष्कर्मी एव न, बुद्धिमान् कार्यकुशलः चिन्तकः च आसीत् । तत्तुल्यः अद्वितीयः विद्वान् पुरुषार्थी च महापुरुषः संसारे न अस्ति । तस्य चेतसि वर्तमानानि कतिचिद् ज्ञानानि संसारे अन्ये जनाः न जानन्ति ।

**लक्ष्मणः** अतः किम् ?

**रामचन्द्रः** यदि सः मृतः तर्हि तेन सह तस्य ज्ञानराशिः अपि विलुप्तः भविष्यति । तत् न उचितम् । अतोऽहम् इच्छामि - 'रावणे मृतेऽपि तस्य ज्ञानं लुप्तं न स्यात् ।'

**लक्ष्मणः** मृते पुरुषे तस्य ज्ञानम् अपि नष्टं भवति एव । न केनचन उपायेन तस्य ज्ञानं रक्षितुं शक्यते । अतः भवतः चिन्ता व्यर्था एव ।

**रामचन्द्रः** नहि नहि । रावणस्य ज्ञानस्य संरक्षणाय एकः उपायः वर्तते । स उपायोऽस्माभिः अवलम्बनीयः । किन्तु तम् उपायम् अवलम्बितुं सम्प्रति त्वम् एव क्षमोऽसि ।

**लक्ष्मणः** अहं सज्जोऽस्मि । कथ्यताम्, मया किं कर्तव्यम् ?

**रामचन्द्रः** (लक्ष्मणस्य वामे स्कन्धे स्वदक्षिणहस्तं विन्यस्य) सम्प्रति मरणासन्नस्य रावणस्य अभिमानः विलुप्तोऽस्ति । अतः त्वं तस्य समीपं गच्छ । नम्रीभूय ज्ञानोपदेशं याचस्व ।

**लक्ष्मणः** एवम् ? अहं तथा करोमि । (प्रणम्य निर्गच्छति)



शरैः विद्धः रावणः रणभूमौ उत्तानीभूय सुप्तोऽस्ति । आपादमस्तकं तस्य शरीरे अनेके व्रणाः दृश्यन्ते । लक्ष्मणः समागत्य तं प्रणमति । रावणः लक्ष्मणं पश्यति किन्तु किमपि न वदति । बहुकालं रावणस्य निःशब्दतां विलोक्य लक्ष्मणोऽधीरः भवति । रावणस्य व्यवहारात् क्रुद्धः खिन्नमानसः च स स्वशिविरं प्रत्यागच्छति । तत्र हनुमान् जाम्बवान् विभीषणोऽङ्गदः च रामं परितः स्थिताः भवन्ति ।

**रामचन्द्रः** आगच्छ भ्रातः, रावणात् ज्ञानोपदेशः लब्धः ?

**लक्ष्मणः** (प्रणम्य) न, भवतः आज्ञया अहं गतः किन्तु रावणः मम उपस्थितौ निःशब्दः एव स्थितः । अतोऽहं प्रत्यागच्छम् । स मह्यं ज्ञानोपदेशं नैव अददात् ।

**रामचन्द्रः** (लक्ष्मणं सान्त्वयन् किञ्चिद् विहस्य) लक्ष्मण, अभिमानिने जनाय गुरवः ज्ञानं न ददति । त्वयि विजयस्य अभिमानः विद्यते । तं परित्यज्य गच्छ तदनु रावणः तुभ्यं ज्ञानम् अवश्यं दास्यति ।

**जाम्बवान् :** वीरवर लक्ष्मण, प्रभुः साधु उक्तवान् । अभिमानद्वारा ज्ञानं प्राप्तुं नैव शक्यते । तदर्थं गुरुजनेषु सम्मानस्य अपेक्षा भवति । सम्मानं प्रदर्श्य एव ज्ञानस्य उपदेष्टुः ज्ञानं लब्धुं शक्यते ।

**विभीषणः** मम ज्येष्ठः भ्राता रावणः विनतभावेन गच्छते जनाय सर्वस्वं दातुं प्रभवति । भ्रातः लक्ष्मण, सम्मानभावे प्रदर्शिते स त्वाम् अपि निराशं न करिष्यति ।

**हनुमान् :** भ्रातः लक्ष्मण ! भवता ज्ञानस्य प्राप्तये महान् अवसरः लब्धः । एषोऽवसरः न हेयः ।

**रामचन्द्रः** लक्ष्मण ! त्वं पुनः गच्छ । रावणस्य पादस्थले तिष्ठ । तदनु जीवनस्य जगतश्च विषये उपदेष्टुं निवेदय ।

(**सर्वेषां वचनानि श्रुत्वा लक्ष्मणः लज्जितः भवति । स पुनः तान् प्रणम्य रावणस्य समक्षं प्राप्नोति ।**)

**लक्ष्मणः** (**ससम्मानम् अभिवादनं विधाय**) महाराज ! अहं भ्रातुः रामस्य आज्ञया ज्ञानोपदेशं प्राप्तुं भवतः समक्षं आगतोऽस्मि । कृपया मम कृते ज्ञानं समुपदिश्यताम् ।

(**रावणः आहतजन्यां पीडां सहमानः आसीत् । स पुनः समायातस्य लक्ष्मणस्य मधुरेण वचसा प्रसन्नोऽभवत् । नम्रेण व्यवहारेण प्रभावितः । स लक्ष्मणं निर्निमेषं विलोकयन् आसीत् । किञ्चित् देहं कम्पयन् स शिरः किञ्चिद् उच्चैः अकरोत् ।**)

**रावणः** लक्ष्मण ! अहं तव शत्रुः आसम् । इदानीं त्वयि रामचन्द्रे च मम शत्रुता विलीना । अहं स्वस्य अहङ्कारेण आत्मानं निजकुलं निजराष्ट्रं निजवैभवं

च अनाशयम् । इदानीं मयि कान् अपि जनान् प्रति वैरं नास्ति । मम अहङ्कारः अपि नष्टः । इदानीं त्वं मम पुत्र इव वर्तसे । अतोऽहं तुभ्यं ज्ञानं ददामि । मम अनुभवं च श्रावयामि ।

**लक्ष्मणः** (रावणस्य साधुवचसा विस्मितः सन् अञ्जलिं बध्वा) अहम् अपि मेघनाद इव भवतः पुत्रोऽस्मि । अतः ज्ञानं याचमानः भवतः समक्षं आगतोऽस्मि ।

**रावणः** तव भ्राता रामचन्द्रः महापुरुषोऽस्ति इति अभिमानवशाद् अहं विलम्बेन ज्ञातवान् । तेन सह मया शत्रुता कृता इति दुःखस्य विषयः । ज्ञानस्य बलस्य ऐश्वर्यस्य च अभिमानेन अहं रामचन्द्रेण सह वैरम् अकरवम् । अतः मम एतादृशी गतिः अभवत् । लक्ष्मण ! जीवने त्वं कदापि बलस्य ज्ञानस्य बुद्ध्याः वीरतायाश्च अभिमानं न कुरु । सहयोगी, परोपकारी परिश्रमी च जनः जीवने साफल्यं प्राप्नोति । त्वं तथा भव ।

**लक्ष्मणः** आम् ।

**रावणः** समयस्य परिपालनं त्वया सर्वदा कर्तव्यम् । समयः सर्वान् वशीकरोति । समयः कस्यापि वशे न भवति ।

**लक्ष्मणः** समयस्य परिपालने भवतः आग्रहः किमर्थम् ?

**रावणः** शृणु, इमानि कार्याणि करिष्यामि इति सङ्कल्पितानां कर्मणाम् अपि सम्पादनम् अहं नैव कृतवान् । अहं यथासमयं सङ्कल्पितानि कार्याणि अकरिष्यम् तर्हि इदानीं मम प्राणाः ससुखम् अगमिष्यन् ।

**लक्ष्मणः** लङ्केश ! तादृशानि सङ्कल्पितानि किन्तु अकृतानि कर्माणि कानि आसन् ?

**रावणः** इक्षौ मधुरफलस्य सुवर्णे सुगन्धस्य च सन्निवेशः भवेत् इति मया कल्पना कृता आसीत् । एवं च बालानाम् अकालमृत्युः मा भूत् इति विचार्य वृद्धस्य अनुक्रमेण जनानां मृत्युव्यवस्थां कर्तुं मया सङ्कल्पः विहितः । परन्तु पश्चात् करिष्यामि इति विचारेण कार्यारम्भः नैव कृतः ।

**लक्ष्मणः** (रावणस्य महत्या भावनया लक्ष्मणः प्रसन्नः भूत्वा) भवतः कियान् चारुः विचारः !

**रावणः** इत्येव न, अतिवृष्ट्या अनावृष्ट्या च जनाः भृशं पीडिताः सन्ति । अतः समुचिते काले यथावश्यकं जलवृष्टेः व्यवस्था अपि मम योजनायाम् आसीत् । सशरीरं स्वर्गं जिगमिषूणां जनानाम् अभीष्टपूरणाय स्वर्गयोजकस्य सोपानस्य निर्माणेऽपि मम इच्छा आसीत् । समये कार्यम् अकृत्वा मम योजना निष्फला जाता इति खेदम् अनुभवामि । लक्ष्मण ! मृत्यून्मुखस्य मम योजनाः इच्छायाम् एव सीमिताः अभवन् । अतः त्वं कार्याणां सम्पादनार्थं समयस्य सदुपयोगाय प्रयत्नं कुरु ।

**लक्ष्मणः** महाराज ! भवतः कार्याणां योजनां श्रुत्वा अहं विस्मितोऽस्मि । तानि कार्याणि कर्तुं भवान् समर्थोऽपि आसीत् किन्तु बलवान् समयः कम् अपि न प्रतीक्षते । कानिचन कार्याणि पश्चात् करिष्यामि इति विचार्य अहम् अपि वर्ते । भवतः उपदेशं श्रुत्वा अहं निश्चितवान् यत्, इतः समयस्य परिपालने प्रमादं कदापि न करिष्यामि । भवतः पुरतोऽहम् एवम् प्रतिजाने ।

(लक्ष्मणस्य वचनेन रावणः प्रसीदति । लक्ष्मणोऽपि रावणाद् अनेकानि उपयोगीनि ज्ञानानि प्राप्य प्रसन्नः भूत्वा स्वशिविरं प्रत्यागच्छति)

(रावणले सीताको अपहरण गरे त्यसैले उनीसँग राम र लक्ष्मणको विशाल युद्ध भयो । त्यो युद्धमा रामको बाण लागेर रावण घाइते भए । उनको पराजय भयो । मर्ने अवस्थामा पुगेका उनी अहिले रणभूमिमै पछारिएका छन् । त्यसैले रामचन्द्रको शिविरमा सबैतिर विजयको उत्सव चलेको छ । हनुमान् वानरसेनाको बिचमा बसेर गीत गाउँदै छन् । नल, नील र अङ्गद चाहिँ वानरसेनासँगै नाच्दै छन् । केही पर जाम्बवान्सँगै विभीषण पनि ढुङ्गामा बसेका छन् । विभीषणको मुखमा मलिनता र आँखामा आँसु देखिन्छ । मर्न लागेका रावणलाई देखेर लक्ष्मण त अति नै खुसी छन् तर रामको मुखमा त्यस्तो प्रसन्नता छैन ।)

**लक्ष्मण** हेर्नुहोस् दाजु, हाम्रो सबैभन्दा ठुलो शत्रु रावण घाइते भएको छ; भुइँमा ढलेको छ र मर्न लागेको छ। हामी त युद्धका विजेता भइसक्यौँ । अब त हाम्री भाउजूले पनि रावणको बन्धनबाट मुक्ति पाउनुहुने छ । यो त हाम्रा लागि हर्षको महान् अवसर हो तर पनि तपाईंको अनुहारमा जित र खुसीको भाव देखिएको छैन । यस्तो देख्दा म छक्क परेको छु ।

**रामचन्द्र** त्यस्तो केही होइन भाइ, म पनि प्रसन्न नै छु ।

**लक्ष्मण** तर तपाईंको अनुहारमा अहिले पनि मलिनता नै झल्किन्छ । दाजु, यसको कारण के हो ?

**रामचन्द्र** लक्ष्मण, रावण अहङ्कारी र व्यभिचारी थियो । बलले उन्मत्त भएर त्यसले न्याय, धर्म र सत्यको सधैँ अपमान मात्र गर्‍यो ।

**लक्ष्मण** (दाजुको कुरा सुनेर क्रोधले राता आँखा बनाएर) त्यति मात्र होइन, यसले सधैँ नारीहरूको अस्तित्वलाई भस्म बनायो । जनकपुत्री सीतालाई छलपूर्वक अपहरण गरेर नारीको सत्ता र स्वाभिमानलाई परालको त्यान्द्रो झैँ उपेक्षा गर्‍यो । यस्तो दुष्टात्माको मृत्युमा हामीले प्रसन्न हुनुपर्छ ।

**रामचन्द्र** हो, यस्ता दुष्टको मृत्यु हुनु राम्रो हो । त्यसैले (वरिपरि रहेका वानरसेनालाई देखाउँदै) सत्यको साथमा रहने यी सबै मेरा हितैषीहरू अहिले प्रसन्न छन् । म पनि प्रसन्न नै छु ।

**लक्ष्मण** (एकोहोरो दाजुलाई हेर्दै) तपाईँले मनमा कुनै कुरा त अवश्य लुकाइरहनुभएको छ । दाजु, कुन कुराले तपाईँलाई सताइरहेको छ ? मलाई भन्नुहोस् ।

**रामचन्द्र** रावणको मृत्यु हुन लागेको कुराले म खुसी मात्र होइन, दुःखी पनि भएको छु लक्ष्मण !

**लक्ष्मण** (अचम्म मान्दै) मर्न लागेको रावणको अवस्थाले तपाईँलाई दुःखी पनि बनाएको छ रे ! तर किन ?

**रामचन्द्र** भाइ, रावण अभिमानी, निर्दयी र दुष्कर्मी मात्र होइन, बुद्धिमान्, जस्तोसुकै काम गर्न पनि सिपालु र चिन्तनशील व्यक्ति पनि थियो । ऊ जस्तो अद्वितीय विद्वान् र पुरुषार्थी महापुरुष संसारमा अर्को छैन । उसको मनमा रहेका कतिपय ज्ञानहरू ऊबाहेक संसारका कुनै पनि मानिसहरूलाई थाहै छैन ।

**लक्ष्मण** होस् न त, हामीले के गर्नु र यसमा ?

**रामचन्द्र** यदि रावण मर्‍यो भने ऊसँगै उसको त्यो ज्ञानराशि पनि संसारबाटै समाप्त हुने छ । त्यसो हुनु राम्रो होइन । त्यसैले रावण मरे पनि उसको ज्ञान नमरोस् भन्ने म चाहन्छु ।

**लक्ष्मण** मान्छे मरेपछि ऊसँग भएको ज्ञान पनि नष्ट हुन्छ नै । कुनै पनि उपायले त्यो ज्ञानलाई सुरक्षित राख्न सकिँदैन । त्यसैले रावणको ज्ञान नष्ट होला कि भनेर तपाईँ बेकारको चिन्ता गरिरहनुभएको छ ।

**रामचन्द्र** होइन होइन । रावणको ज्ञानलाई जोगाउने एउटा उपाय छ । त्यो उपाय हामीले प्रयोग गर्नुपर्छ । तर त्यसका लागि तिमी मात्र समर्थ छौ ।

**लक्ष्मण** म तयार छु । आज्ञा दिनुहोस्, त्यसका लागि मैले के गर्नुपर्छ ?

**रामचन्द्र** (लक्ष्मणको देब्रे काँधमा आफ्नो दाहिने हात राखेर) मरणासन्न अवस्थामा पुगेको रावणमा अहिले कुनै पनि अभिमान बाँकी छैन । सबै नाश भइसक्यो । त्यसैले तिमी उसको नजिकमा जाऊ । नम्र भएर आफ्ना लागि ज्ञान माग ।

**लक्ष्मण** हस् । म त्यसै गर्छु । (अभिवादन गरेर निस्कन्छन्)

बाण लागेर घाइते भएका रावण रणभूमिमा उत्तानो परेर सुतेका छन् । पैतालादेखि शिरसम्म उनको शरीरमा अनेकौँ घाउहरू देखिन्छन् । लक्ष्मण आएर उनलाई नमस्कार गर्दछन् । रावण लक्ष्मणलाई एकपटक पुलुक्क हेर्दछन् तर केही बोल्दैनन् । धेरै बेरसम्म रावण नबोली बसेको देखेर लक्ष्मण धैर्य गर्न सक्दैनन् । रावणको त्यस्तो व्यवहारले लक्ष्मणको मन खिन्न हुन्छ । उनी रिसाउँदै आफ्नो शिविरतर्फ फर्किन्छन् । त्यहाँ रामको वरिपरि हनुमान्, जाम्बवान्, विभीषण र अङ्गद बसेका हुन्छन् ।

**रामचन्द्र** आऊ भाइ, तिमीले रावणबाट केही ज्ञानको उपदेश प्राप्त गऱ्यौ त ?

**लक्ष्मण** (अभिवादन गरेर) अहँ, म तपाईंको आज्ञाले गएँ तर रावण म त्यहाँ उपस्थित भएपछि नै चुपचाप बस्यो; बोल्दै बोलेन त्यसैले म फर्किएर आएँ । उसले मलाई कुनै पनि ज्ञान दिएन ।

**रामचन्द्र** (लक्ष्मणलाई सम्झाउँदै मुस्कुराएर) लक्ष्मण ! अभिमानी व्यक्तिलाई गुरुहरूले ज्ञान दिँदैनन् । तिमीमा विजयको अभिमान छ । त्यसलाई त्यागेर जाऊ । त्यसपछि मात्र रावणले तिमीलाई अवश्य ज्ञान दिने छन् ।

**जाम्बवान्** वीरवर लक्ष्मण, प्रभुले उचित भन्नुभयो । अभिमान बोकेर ज्ञान प्राप्त गर्न सकिँदैन त्यसैले त गुरु जनले सम्मानको अपेक्षा गर्दछन् । सम्मान प्रदर्शन गरेर नै ज्ञानको उपदेश गर्ने गुरुहरूबाट ज्ञान लिन सकिन्छ ।

**विभीषण** मेरा जेठा दाजु रावणले शिष्टतापूर्वक गएको मानिसलाई सर्वस्व दिने गर्नुहुन्छ । भ्राता लक्ष्मण, सम्मानको भावना देखाउनुभयो भने उहाँले तपाईंलाई पनि निराश पार्नुहुने छैन ।

**हनुमान्** भ्राता लक्ष्मण ! तपाईंले ज्ञान प्राप्त गर्ने महान् अवसर पाउनुभएको छ । यो अवसरलाई बेवास्ता गर्नु हुँदैन ।

**रामचन्द्र** लक्ष्मण ! तिमी फेरि जाऊ । रावणको गोडातिर गएर बस । त्यसपछि जीवन र जगत्का विषयमा उपदेश दिन अनुरोध गर ।

(सबैका कुरा सुनेर लक्ष्मण लज्जित हुन्छन् । उनी फेरि उपस्थित सबैलाई नमस्कार गरेर रावण भएको ठाउँमा पुग्दछन् ।)

**लक्ष्मण** (ससम्मान अभिवादन गर्दै) महाराज ! मेरा दाजु रामचन्द्रको आज्ञाले ज्ञानको उपदेश प्राप्त गर्न म तपाईंका सामु आएको छु । कृपा गरेर मलाई ज्ञानको उपदेश गर्नुहोस् ।

(रावण घाउको दुखाइ सहेर बसिरहेका थिए । फेरि फर्किएर आएका लक्ष्मणको मिठो बोलीले उनी प्रसन्न भए भने नम्र व्यवहारले प्रभावित भए । उनले लक्ष्मणलाई एकोहोरो हेरिरहे अनि लडेको शरीर यताउति चलाउँदै आफ्नो शिर अलिकति उठाए ।)

**रावण** लक्ष्मण ! म तिम्रो शत्रु थिएँ । अहिले तिमी र राममा मेरो शत्रुता रहेन । मैले आफ्नै अहङ्कारका कारण आफ्नो कुल, देश र वैभवलाई नष्ट गरेँ । अब त ममा कसैका प्रति कुनै पनि शत्रुता छैन । मेरो अहङ्कार नष्ट भयो । अहिले त तिमी मेरो पुत्रतुल्य छौ । त्यसैले म तिमीलाई ज्ञान प्रदान गर्दछु र मेरा अनुभवहरू पनि सुनाउँछु ।

**लक्ष्मण** (रावणको मिठो कुराले छक्क पर्दै अँजुली बाँधेर) म पनि तपाईंको छोरा मेघनाद जस्तै हुँ । त्यसैले ज्ञानको याचना गर्दै तपाईंका सामु आएको हुँ ।

**रावण** तिम्रा दाजु रामचन्द्र महापुरुष हुन् भन्ने कुरा अभिमानका कारण मैले धेरै ढिलो थाहा पाएँ । त्यस्ता व्यक्तिसँग मैले शत्रुता गरेँ । यही नै मेरा लागि दुःखको कुरा हो । ज्ञान, बल र ऐश्वर्यको अभिमानका कारण मैले रामचन्द्रसँग शत्रुता गरेको हुँ । त्यसैले मेरो यस्तो गति भयो । लक्ष्मण, तिमीले जीवनमा कहिल्यै पनि बल, ज्ञान, बुद्धि र वीरताको अभिमान नगर्नू । सहयोगी, परोपकारी र परिश्रमी मानिसले जीवनमा सफलता प्राप्त गर्दछ । तिमी त्यस्तै हुनू ।

**लक्ष्मण** अवश्य ।

**रावण** समयको परिपालन तिमीले सधैँ गर्नुपर्दछ । समयले सबैलाई आफ्नो नियन्त्रणमा राख्ने गर्दछ तर समय कसैको पनि नियन्त्रणमा हुँदैन ।

**लक्ष्मण** समयको परिपालन गर्ने कुरामा तपाईंले किन यति धेरै आग्रह गर्नुभएको हो ?

**रावण** सुन, यी कामहरू गर्ने छु भनेर सङ्कल्प गरिएका कामहरू मैले गरिनँ । यदि मैले समयमा नै सङ्कल्प गरेका कामहरू गरेको थिएँ भने अहिले सुखपूर्वक मेरो प्राण जाने थियो ।

**लक्ष्मण** लङ्केश ! तपाईंले सङ्कल्प गरेर पनि सम्पादन नगरेका के कस्ता कामहरू थिए ?

**रावण** उखुमा मिठो फल र सुनमा सुगन्ध राख्ने कल्पना मैले गरेको थिएँ । त्यसैगरी बालबालिकाको अकालमा मृत्यु नहोस् भन्ने विचार गरेर वृद्धहरूकै क्रमअनुसार मृत्युको व्यवस्था गर्ने सङ्कल्प मैले गरेँ तर पछि गरौँला भनेर कामको थालनी नै गरिनँ ।

**लक्ष्मण** (रावणको महान् विचार सुनेर लक्ष्मण खुसी भएर) कस्तो राम्रो तपाईंको विचार !

**रावण** यति मात्र हो र ! अतिवृष्टि र अनावृष्टिबाट मानिसहरू धेरै पीडित छन् । त्यसैले चाहिएको बेला आवश्यक मात्र जलवृष्टि गराउने व्यवस्था मेरो योजनामा थियो । जिउँदै स्वर्ग जान चाहने मानिसहरूको चाहना पूरा गर्न स्वर्गलाई जोड्ने भऱ्याङको निर्माण गर्ने इच्छा पनि राखेँ । समयमा काम नगर्दा मेरा सबै योजनाहरू निष्फल भए । यसमा मलाई खेद लागेको छ । लक्ष्मण, अब त म मर्न लागेँ । मेरा योजनाहरू इच्छामा मात्र सीमित भए । तिमीले चाहिँ काम गर्नका लागि समयको सदुपयोग गर्नुपर्छ । त्यसैका लागि प्रयास गर ।

**लक्ष्मण** महाराज ! तपाईंका कामका योजनाहरू सुनेर म त चकित भएको छु । ती सबै कामहरू गर्न तपाईं समर्थ हुनुहुन्थ्यो तर बलवान् समयले कसैलाई पनि पर्खिँदैन । कुनै कुनै कामहरू पछि गरौँला भनेर मैले पनि छोड्ने गरेको छु । तपाईंको ज्ञानोपदेश सुनेर समयको परिपालन गर्ने कुरामा आइन्दा कहिल्यै खेलाँची गर्दिनँ भनेर मैले निश्चय गरेँ । तपाईंका सामु यो मेरो प्रतिज्ञा नै भयो ।

लक्ष्मणको प्रतिज्ञा वचन सुनेर रावण प्रसन्न हुन्छन् । लक्ष्मण पनि रावणबाट अनेक उपयोगी ज्ञानहरू पाएर प्रसन्न हुँदै आफ्नो शिविरमा फर्किन्छन् ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| आहतः | अभिशप्तः | घाइते | Wounded |
| मृत्यून्मुखः | म्रियमाणः | मर्न लागेको | Dieing |
| पाषाणस्य | शिलायाः | ढुङ्गाको | Of stone |
| अश्रुविन्दवः | नेत्रजलानि | आँसु | Tears |
| प्रजावती | ज्येष्ठभ्रातुः पत्नी | भाउजू | Elder brother's wife |
| मुखमण्डले | मुखाकृतौ | अनुहारमा | In the face |
| उन्मत्तः | उन्मादयुक्तः | बौलाहा जस्तो भएको | As a insane |
| रक्तिमे | लोहिते | रातो | Red |
| धूलिसात् | मृत्कणवत्/मूल्यहीनम् | धुलो झैँ मूल्यहीन | Valueless as dust |
| जनकनन्दिनीम् | जनकस्य पुत्रीम् | जनककी छोरीलाई | To Sita |
| परितः | सर्वतः/इतस्ततः | वरिपरि | Around |
| पक्षपातिनः | पक्षधराः/अनुयायिनः | पक्ष लिने/ समर्थकहरू | Supporters |
| निगूढा | प्रच्छन्ना/रहस्यमयी | लुकेको/रहस्यमय | Mysterious |
| निकटस्थेन | समीपे वर्तमानेन | नजिकमा भएको | Close |
| तत्तुल्यः | तत्सदृशः/तेन समानः | त्यो (वस्तु वा व्यक्ति) सँग समान | Like this |
| पुरुषार्थी | कर्मशीलः/परिश्रमी | पौरखी | Brave |
| व्यर्था | प्रयोजनरहिता | बेकार | In vain |
| अवलम्बितुम् | स्वीकर्तुम् | स्वीकार गर्न | To agree |
| सज्जः | कटिबद्धः | तयार | Ready |
| विलुप्तः | नष्टः | नाश भएको | Lost |

| | | | |
|---|---|---|---|
| नम्रीभूय | विनयेन युक्तः भूत्वा | विनम्र भएर | Snowing politness |
| विद्धः | आहतः | घाइते | Injured |
| आपादमस्तकम् | सम्पूर्णं शरीरम् (पादात् शिरः यावत्) | शरीरभरि (पाउदेखि शिरसम्म) | In the wholebody |
| व्रणाः | ईर्माणि | घाउहरू | Wounds |
| अधीरः | अशान्तः | अशान्त | Inpatient |
| निःशब्दः | शब्दहीनः | चुपचाप | Silent |
| सान्त्वयन् | शान्तिवचसा प्रेरयन् | सम्झाउँदै | To cause understand |
| सहमानः | सहनं कुर्वन् | सहन गर्ने | Tolerant |
| निर्निमेषम् | अखण्डितदृष्ट्या | एकोहोरो दृष्टिले | Looking deeply |
| सङ्कल्पितानि | करिष्यामि इति कथितानि | गर्ने छु भनिएको | Promised |
| इक्षौ | रसाले | उखुमा | In the sugarcane |
| सन्निवेशः | स्थापनाकार्यम् | राख्ने काम | To instau |
| जिगमिषूणाम् | गन्तुम् इच्छुकानाम् | जान इच्छा राख्नेहरूको | Eager to go |
| अभीष्टपूरणाय | कामनायाः सिद्धये | इच्छा पूरा गर्नका लागि | To fulfill desire |
| प्रयत्नम् | प्रयासम् | कोसिस | Endevour, efforts |
| प्रतीक्षते | प्रतीक्षां करोति | पर्खन्छ | Waits |
| प्रमादम् | असावधानताम् | असावधानी | Negligence |
| पुरतः | अग्रे | अगाडि | Infront |

# अभ्यासः

## श्रवणं भाषणञ्च

**१. पाठस्थं संवादं साभिनयं पठत ।**

**२. रावणेन स्वसंवादे प्रयुक्तानि भूतकालिकक्रियापदयुक्तानि वाक्यानि पठित्वा सखीन् श्रावयत ।**

**३. पाठस्थे संवादे कतीनां चरितानां प्रयोगः वर्तते ? तेषां नामानि कथयत ।**

**४. शिक्षकमुखाद् अधः प्रदत्तानि पदानि श्रुत्वा अनूच्चारयत**

म्रियमाणः, पीडयन्ती, निर्निमेषम्, उत्तानीभूय, सन्निवेशः, जिगमिषूणाम्, जाम्बवान्, व्रणाः, विद्धः

**५. शिक्षकस्य मुखात् पाठस्य प्रारम्भे वर्तमानम् अनुच्छेदं श्रुत्वा अधस्तनानां प्रश्नानाम् उत्तरं कथयत**

(क) सीतायाः अपहर्ताः कः आसीत् ?

(ख) रामरावणयोः सङ्ग्रामः किमर्थम् अभवत् ?

(ग) सङ्ग्रामे कयोः जयपराजयौ अभवताम् ?

(घ) हनुमान् किं कुर्वन् अस्ति ?

(ङ) जाम्बवान् कुत्र वर्तते ?

(च) विभीषणस्य मुखं कीदृशं दृश्यते ?

(छ) लक्ष्मणः किमर्थं मोदमानः वर्तते ?

६. **अधस्तनानि वाक्यानि श्रुत्वा सत्यवाक्ये 'आम्' असत्यवाक्ये 'नहि ' इति वदत**

(क) जाम्बवान् वानराणां सेनाभिः सह गायन् आसीत् । ................

(ख) रावणस्य पराजये रामचन्द्रः मोदमानः आसीत् । ................

(ग) रामस्य बाणेन रावणः झटिति मृतः । ................

(घ) रावणस्य पार्श्वे लक्ष्मणः ज्ञानाय गतवान् । ................

(ङ) रावणः समयस्य परिपालनाय लक्ष्मणम् उपदिष्टवान् । ................

७. **श्रवणपाठस्य आधारेण अधस्तनान् प्रश्नान् उत्तरयत**

(क) बहुशः नैपालकाः जनाः किं कुर्वन्ति ?

(ख) नेपालस्य कृषिपद्धतिः कीदृशी अस्ति ?

(ग) पर्वतीयक्षेत्रे भूमिखननं कथं क्रियते ?

(घ) कृषौ यन्त्रप्रयोगेण कानि कानि कर्माणि कर्तुं शक्यन्ते ?

(ङ) अधुना कस्य समस्या नास्ति ?

## पठनम्

१. **वाक्यचिह्नविसर्गानुस्वारादीन् विचार्य अधोदत्तस्य संवादस्य द्रुतपठनं कुरुत**

**ललिता** सखे ! मोबाइलयन्त्रे किं कुर्वन् असि ?

**कुमारः** ललिते ! त्वम् आगच्छ, अत्र तिष्ठ । अद्य विद्यालयस्य अवकाशः । मोबाइलयन्त्रं चालयन् अस्मि । कालक्षेपणं कर्तव्यम् किल ।

**ललिता** वयं बालाः । तत्रापि विद्यार्थिनः । अस्माकं कार्यं तु पठनम् अस्ति । पठनं समाप्य खेलनं कर्तव्यम् । अस्माकं पार्श्वेऽधिकः समयः नास्ति । त्वं तु कालक्षेपणाय मोबाइलयन्त्रं पश्यन् असि ।

**कुमारः** मया गृहकार्याणि समाप्तानि । पाठस्य पुनरावृत्तिः अपि कृता । खेलनाय सखायः सम्प्रति न सन्ति । अतः मोबाइलयन्त्रं सञ्चालयन् अस्मि । अत्र का हानिः ?

**ललिता** मोबाइलयन्त्रस्य अधिकः प्रयोगोऽनुचितः ।विशेषतः सामाजिकसञ्जालस्य प्रयोगे वयं सावधानाः भवेम ।

**कुमारः** अवश्यम् । ललिते ! अहं सामाजिकसञ्जालस्य यथोचितं प्रयोगं करोमि । अध्ययनाय अपि एतस्य प्रयोगं कर्तुं शक्यते, तथा करोमि । एतस्य दुरुपयोगविषयेऽहं सचेतोऽस्मि ।

**ललिता** साधु । आगच्छ । क्षणं ग्रामभ्रमणं करवाव ।

**कुमारः** तथा इच्छसि चेत् गच्छाव ।

२. **रावणस्य अन्तिमं संवादं मौनीभूय वाचयित्वा सन्देशं कथयत ।**

३. **अधस्तनं चित्रं दृष्ट्वा प्रदत्तानां प्रश्नानाम् उत्तरं लिखत**



(क) चित्रे बालाः किं कुर्वन्तः सन्ति ?

(ख) मृदङ्गस्य कार्यं किम् ?

(ग) जनः किं कुर्वन् अस्ति ?

**४. अधस्तनम् अनुच्छेदं सम्यक् पठित्वा शीर्षकं निर्धारयत**

मनुष्यः कर्मणां पाशेन बद्धः भवति । कर्तव्यनिर्वाहं कुर्वन् प्रत्येकं जनः सदा व्यस्तः भवति । व्यस्तं जीवनं स्वादहीनं जायते । अतः स कदाचित् स्वतन्त्रः भूत्वा भ्रमितुम् इच्छति । बन्धनयुक्तं सुखं दुःखम् एव मन्यते । पक्षिणाम् इव बन्धनरहितं जीवनं सुखदं भवति इति कवयः वदन्ति । अतः समयम् अन्विष्य जनाः भ्रमणं कुर्वन्ति । भ्रमणाय सुन्दराणि प्राकृतिकस्थलानि उत्तमानि भवन्ति । प्रकृतिः ज्ञानानां रहस्यानां च अनन्तं स्रोतः वर्तते । प्रकृतेः सामीप्यं जीवनस्य सर्वश्रेष्ठं सुखम् निगद्यते । अतः मुनयः ज्ञानाय वनं गच्छन्ति । योगिनः ध्यानाय हिमालयं प्राप्नुवन्ति । पर्यटकाः सुदूरदेशं गत्वा प्रकृतिम् अवलोकयन्ति ।

मानिस कामको जालोले बाँधिएको हुन्छ । आफ्नो काम गरिरहने प्रत्येक मानिस सधैँ व्यस्त हुन्छ । यस्तो जीवन नमिठो हुन्छ । त्यसैले मानिस कहिलेकाहीँ स्वतन्त्र भएर घुम्न चाहन्छ । बन्धनयुक्त सुखलाई त दुःख नै मानिन्छ । चराको जस्तै बन्धनरहित जीवन नै सुखद हुन्छ भनेर कविहरू भन्दछन् । त्यसैले समय मिलाएर मानिसहरूले भ्रमण गर्ने गर्दछन् । भ्रमणका लागि सुन्दर प्राकृतिक स्थलहरू उत्तम हुन्छन् । प्रकृति ज्ञान र रहस्यको अनन्त स्रोत हो । प्रकृतिसँग नजिक बस्नुलाई नै जीवनको सर्वश्रेष्ठ सुख भनिन्छ । त्यसैले ऋषिहरू ज्ञानका लागि वन जान्छन् र योगीहरू ध्यान गर्न हिमालमा पुग्दछन् । त्यसैगरी पर्यटकहरू टाढाका देशहरूमा गएर प्रकृतिको अवलोकन गर्दछन् ।

## ५. अनुच्छेदं पठित्वा उत्तरं वदत

मनुष्योऽध्ययननशीलः जिज्ञासुः प्राणी वर्तते । सोऽध्ययनं कृत्वा बहुज्ञः भवितुम् इच्छति । तदर्थं विविधक्षेत्राणां विषये लिखितानां पुस्तकानाम् अध्ययनं कर्तव्यम् । स्वरुचिसम्बद्धानि पुस्तकानि सर्वेषां पार्श्वे न भवितुं शक्नुवन्ति । कानिचन पुस्तकानि पुस्तकालयेषु एव लभ्यन्ते । अतः जनाः पुस्तकानाम् अध्ययनाय पुस्तकालयं गच्छन्ति । पुस्तकालये प्राचीनानां नवीनानां च पुस्तकानां सङ्ग्रहः भवति । तत्र ज्ञानस्य विभिन्नानां क्षेत्राणां विषये लिखितानि पुस्तकानि प्राप्यन्ते । अतः पुस्तकालयः ज्ञानस्य महान् राशिः वर्तते । अयं शैक्षिकसंस्थानां महत्त्वपूर्णम् अङ्गम् मन्यते ।

(क) मनुष्यः कीदृशः प्राणी वर्तते ?

(ख) बहुज्ञः भवितुं किं कर्तव्यम् ?

(ग) जनाः पुस्तकालयं किमर्थं गच्छन्ति ?

(घ) पुस्तकालये कीदृशानि पुस्तकानि प्राप्यन्ते ?

(ङ) कासाञ्चन तिसृणां शैक्षिकसंस्थानां नामानि वदत ।

मानिस अध्ययनशील जिज्ञासु प्राणी हो । उसले अध्ययन गरेर धेरै कुरा जान्ने बन्न इच्छा गर्दछ । त्यसका लागि विभिन्न क्षेत्रका विषयहरूमा लेखिएका पुस्तकहरूको अध्ययन गर्नुपर्छ । आफ्नो रुचिअनुसारका पुस्तकहरू सबैसँग नहुन सक्छन् । कतिपय पुस्तकहरू पुस्तकालयमा मात्र पाइन्छन् । त्यसैले मानिसहरू पुस्तकहरूको अध्ययन गर्न पुस्तकालय जान्छन् । पुस्तकालयमा पुराना र नयाँ पुस्तकहरूको सङ्ग्रह गरिएको हुन्छ । त्यहाँ ज्ञानका विभिन्न क्षेत्रहरूका विषयमा लेखिएका पुस्तकहरू पाइन्छन् । त्यसैले पुस्तकालय ज्ञानको महान् भण्डार हो । यसलाई शैक्षिक संस्थाहरूको महत्त्वपूर्ण अङ्ग मानिन्छ ।

६. **पाठं पठित्वा अधस्तनानां घटनानां क्रमनिर्धारणं कुरुत**

( ) रामस्य अप्रसन्नता

( ) रामस्य सैन्यशिविरे विजयोल्लासः

( ) रावणस्य पराजयः

( ) रामबाणेन आहतस्य रावणस्य भूमौ निपातः

( ) रामरावणयोः सङ्ग्रामः

( ) रामस्य उदासीनताविषये लक्ष्मणस्य जिज्ञासा

( ) रावणाद् लक्ष्मणस्य ज्ञानप्राप्तिः

( ) रामादेः प्रेरणया पुनः लक्ष्मणस्य रावणनिकटे सम्मानभावेन गमनम्

( ) रावणस्य निःशब्दतां विलोक्य लक्ष्मणस्य स्वशिविरे प्रत्यागमनम्

( ) रामस्य आज्ञां प्राप्य लक्ष्मणस्य रावणनिकटे गमनम्

७. **उदाहरणम् अनुसृत्य अधस्तनीः पदावलीः श्रुत्वा ताभ्यः ज्ञातम् अर्थं मञ्जूषासहायतया वदत**

हितैषी, सम्मानम्, विजेता, मृतः, अपहरणम्, सङ्कल्पः

उदाहरणम् : कर्म सम्पादनाय कृतः मानसिकः निश्चयः = सङ्कल्पः

(क) यः परान् जयति सः = ............

(ख) बलाद् गृहीत्वा परेषां वस्तुनः ग्रहणम् = ............

(ग) यस्य प्राणाः निर्याताः सः = ............

(घ) आदरस्य भावः = ............

८. **समुचितं उत्तरं वदत**

**(क) रामरावणयोः मध्ये कीदृशः सम्बन्धः आसीत् ?**

(अ) मित्रतापूर्णः (आ) शत्रुतापूर्णः

(इ) आत्मीयः (ई) सामान्यः

**(ख) इक्षौ किं न भवति ?**

(अ) मूलम्　　(आ) दण्डः

(इ) फलम्　　(ई) पत्रम्

**(ग) रावणः कीदृशः आसीत् ?**

(अ) परोपकारी　　(आ) सदाचारी

(इ) तपस्वी　　(ई) बलवान्

**(घ) लक्ष्मणः रावणस्य किं श्रुत्वा विस्मितः ?**

(अ) कार्ययोजनाम्　　(आ) दुःखम्

(इ) पराक्रमम्　　(ई) परिहासम्

९. **रावणस्य केषाञ्चन त्रयाणां कार्याणां योजनाः क्रमेण लिखत ।**

## लेखनम्

१. **अधस्तनानां शब्दानां मातृभाषायां संस्कृते च अर्थं लिखत**

निपतितः, धुलिसात्, हितैषिणः, क्षमः, पुरुषार्थी, अपेक्षा, हेयः, अहङ्कारः, याचमानः, आग्रहः, चारु, जलवृष्टेः, सीमिताः,

२. **'अभिमानद्वारा ज्ञानं प्राप्तुं नैव शक्यते ।' इति वाक्यस्य सरलार्थं लिखत ।**

३. **पाठस्य आधारेण रिक्तस्थानेषु उचितं पदं लिखत**

(क) अस्माकं महान् शत्रुः रावणः ............. वर्तते ।

(ख) ................ छलेन अपहृतवान् ।

(ग) ............. मृते अपि तस्य ज्ञानं लुप्तं न स्यात् इति अहम् इच्छामि ।

(घ) वीरवर लक्ष्मण, प्रभुः ............ उक्तवान् ।

(ङ) त्वं कार्याणां सम्पादनार्थं समयस्य ............ प्रयत्नं कुरु ।

## ४. पर्यायपदानि परस्परं मेलयत

| **समूहः 'क'** | **समूहः 'ख'** |
|---|---|
| खेदः | सार्थकम् |
| सफलम् | हर्षितः |
| सङ्ग्रामः | ग्लानिः |
| प्रसन्नः | अशान्तः |
| भ्राता | युद्धम् |
| म्रियमाणः | निकटम् |
| हितैषी | समर्थः |
| क्षमः | मरणासन्नः |
| समीपम् | अग्रजः |
| अधीरः | शुभेच्छुकः |

## ५. कः कं प्रति उक्तवान् अस्ति ? लिखत

(क) नहि नहि अनुज, अहम् अपि प्रसन्नः एव अस्मि ।

(ख) भ्रातः, का वार्ता भवन्तं पीडयन्ती अस्ति ?

(ग) सम्मानभावे प्रदर्शिते स त्वाम् अपि निराशं न करिष्यति ।

(घ) भवता ज्ञानस्य प्राप्तये महान् अवसरः लब्धः ।

(ङ) अहं तव शत्रुः आसम् ।

## ६. कोष्ठकात् समुचितं पदम् आदाय रिक्तस्थानं पूरयत

(क) रामस्य .......... रावणः मरणासन्नः जातः । (खड्गेन, बाणेन, शापेन)

(ख) हनुमान् वानरसेनाभिः सह ........... आसीत् । (नृत्यन्, कूर्दन्, गायन्)

(ग) रामः रावणस्य ज्ञानं ............. इच्छति स्म । (संरक्षितुम्, नाशयितुम्, प्रवर्धयितुम्)

(घ) ............. योजनायां सुवर्णे सुगन्धस्य सन्निवेशः आसीत् । (रामस्य, लक्ष्मणस्य, रावणस्य)

(ङ) रावणेन पश्चात् ............ इति विचारेण कार्यारम्भः नैव कृतः । (वदिष्यामि, करिष्यामि, द्रक्ष्यामि)

## ७. एकवाक्येन उत्तरयत

(क) रावणः कथम् आहतः अभवत् ?

(ख) रामस्य मुखे कीदृशः भावः नास्ति ?

(ग) कस्य मृत्युः वरम् ?

(घ) रावणतुल्यः कीदृशः जनः संसारे नास्ति ?

(ङ) रामचन्द्रः किम् इच्छति ?

(च) रावणस्य अभिमानः कदा विलुप्तः ?

(छ) रामः किमर्थं रावणस्य पार्श्वे लक्ष्मणं प्रेषितवान् ?

(ज) उपदेष्टुः ज्ञानं कथं लब्धुं शक्यते ?

(झ) रावणस्य अहङ्कारः केषां नाशम् अकरोत् ?

(ञ) केषाम् अभिमानः न कर्तव्यः ?

(ट) कः जीवने साफल्यं प्राप्नोति ?

(ठ) कस्य विचारेण लक्ष्मणः प्रभावितः ?

(ड) रावणस्य योजना कथं निष्फला जाता ?

(ढ) लक्ष्मणः किं निश्चितवान् ?

८. **रावणेन सङ्कल्पितानां कार्याणां सूचीं प्रदर्शयत ।**

९. **संवादस्य प्रारम्भे प्रदत्तस्य अनुच्छेदस्य श्रुतिलेखनं कुरुत ।**

## व्याकरणानुशीलनम्

१. **अधस्तनानि वाक्यानि पठित्वा क्रियापदे रेखाङ्कनं कुरुत**

यूयं कार्याणि कुरुत ।

त्वं विद्यालय गच्छ ।

अहं किं पठानि ?

त्वम् आयुष्मान् भव ।

भवन्तः अस्मान् क्रीडयन्तु ।

वयं चित्राणि रचयाम ।

ते वनक्षेत्रं भ्रमन्तु ।

उपर्युल्लिखितानां वाक्यानां क्रियापदानि विध्यर्थकानि (आज्ञार्थकानि इच्छार्थकानि वा) सन्ति । विध्यर्थे लोट्लकारस्य क्रियापदानि प्रयुज्यन्ते ।

२. **'हस्'धातोः लोट्लकारस्य रूपाणि सम्यक् पठित्वा तदाधारेण प्रदत्तानां धातूनां च लोट्-लकारस्य रूपाणि सारिण्यां प्रदर्शयत**

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः पुरुषः | हसतु | हसताम् | हसन्तु |
| द्वितीयः पुरुषः | हस | हसतम् | हसत |
| तृतीयः पुरुषः | हसानि | हसाव | हसाम |

(क) भू (भव्) (ख) अर्च् (ग) जीव् (घ) भज् (ङ) पत् (च) खाद्

(ख) अधोनिर्दिष्टवाक्यानां विध्यर्थे परिवर्तनं कुरुत

(अ) अहं जल पिबामि ।

(आ) मम सखा आयुष्मान् भवति ।

(इ) छात्राः चत्वरे क्रीडन्ति ।

(ई) युवां गृहकार्यं कुरुथः ।

(उ) वयं जलं पिबामः ।

३. **सन्धिनियमान् पठित्वा सखिभिः सह विमृशत**

कः अस्ति, भवने अस्मि, देवः अवदत्, ते अपि इत्यत्र कोऽस्ति, भवनेऽस्मि, देवोऽवदत् तेऽपि इत्येवं रूपाणां सिद्धिः भवति । अत्र उदाहरणे पूर्वरूपसन्धेः प्रयोगः वर्तते । पूर्वरूपसन्धौ परवर्ती वर्णः (अकारः) पूर्ववर्तिनि एकारे ओकारे वा वर्णे विलीनः भवति ।

**यथा**

**ए+अ** = एऽ हरे+अव = हरेऽव, गृहे+अपि = गृहेऽपि, वने+अगच्छत् = वनेऽगच्छत्, स्वदेशे+अस्मि = स्वदेशेऽस्मि

**ओ+अ=ओऽ** शुद्धो+अस्मि = शुद्धोऽस्मि, लोको+अयम् = लोकोऽयम्, को+अत्र = कोऽत्र, छात्रो+अधीते = छात्रोऽधीते, अनुजो+अखादत् = अनुजोऽखादत्

**(क) अधस्तनप्रयोगानाम् पूर्वरूपसन्धिगतानि रूपाणि लिखत**

मार्गे अत्र, मनो अभिलषितम्, ते अवदन्, सो अन्तिमः, वने अस्मिन्, प्रथमो अध्यायः, हरे अव, चतुरो असि, मे अन्तिके, पर्यटको अगच्छत्, अन्ते अपि

**(ख) संवादे वर्तमानान् पूर्वरूपसन्धेः प्रयोगस्थलान् अन्विष्य तेषां सन्धिविच्छेदं कुरुत ।**

४. **उदाहरणानुसारेण कोष्ठकस्य शब्दं प्रयुज्य रिक्तस्थानं पूरयत ।**

धनिकः **अश्वेन** गच्छति । बालिका **लेखन्या** लिखति । कृषकः **श्रमेण** कार्यं करोति ।

(अ) जनः कर्मणां ........... बद्धः भवति । (पाश)

(आ) ............ विना अध्ययनं न सम्भवति । (गुरु)

(इ) ............ आयुः वर्धते । (घृत)

(ई) पथिकः .......... गौरः वर्तते । (वर्ण)

(उ) एषः ............ कृषकः प्रतीयते । (कार्य)

(ऊ) ........... समं हितैषिणी कोऽपि न भवति । (पत्नी)

(ऋ) पितामहः ............. पुस्तकं पश्यति । (उपनेत्र)

## रचनात्मकः अभ्यासः

१. **'पत्रपत्रिकाणाम् अध्ययनम्' इति विषये एकम् अनुच्छेदं लिखत ।**

२. **नेपालस्य कृषिप्रणालीविषये स्वविचारं प्रकटयत ।**

३. **‘मित्रता’ इतिविषये शिक्षकस्य सहयोगनेन नातिदीर्घं संवादं लिखत ।**

## श्रवणपाठः

अस्माकं देशः नेपालः कृषौ निर्भरः वर्तते । अत्र बहुशः जनाः कृषिकर्म कुर्वन्ति । अतः अयं देशः कृषिप्रधानः उच्यते । अत्र परम्परिता कृषिपद्धतिः बहुत्र प्रचलिता वर्तते । इदानीं कृषिक्षेत्रे अपि विज्ञानस्य प्रविधेश्च विकासः क्रमशः जायमानः वर्तते । कृषकाः कृषौ यन्त्राणां प्रयोगं शनैः शनैः कुर्वन्तः दृश्यन्ते । पर्वतीयक्षेत्रे प्रायः हलमाध्यमेन भूमिखननं क्रियते । तराईक्षेत्रे सुगमक्षेत्रे च ट्र्याक्टरमाध्यमेन भूमिखननं समतलीकरणं च क्रियते । वीजवपनाय घासादिनिवारणाय परिष्काराय अन्नादिसङ्ग्रहणाय च अधुना यन्त्राणि सर्वत्र प्राप्तानि सन्ति । कृषिक्षेत्रे प्रविधेः प्रयोगात् उत्पादने वृद्धिः जाता । कर्मणि सरलता च समागता अस्ति । अल्पश्रमेण अन्नस्य फलस्य शाकस्य च वृद्धिः स्यात् इति सर्वे कृषकाः इच्छन्ति । प्राचीनायां कृषिप्रणाल्यां तथा सम्भवः नासीत् । अधुना तु कृषौ क्रान्तिः समागताः । यन्त्रमाध्यमेन खननाद् आरभ्य गृहे अन्नस्थापनपर्यन्तं सर्वं कर्म सम्पद्यते । कषिजन्यानां वस्तूनां विक्रयाय आपणस्य अपि समस्या नास्ति । अधुना तु कृषकाः व्यवसायमूलकं कृषिकर्म कुर्वाणाः सन्ति । कृषितः अपि अर्थोपार्जनं सम्भवति । अतः कृषकानां अर्थगताम् अवस्थां सुदृढीकर्तुं सर्वैः यतनीयम् ।